THE

PRINCESS OF WALES

SARASWATĪ BHAVANA TEXTS

*No. 75*

---

Edited by

Mahāmahopādhyāya

GOPI NĀTH KAVIRĀJA, M. A.

and

Dr. MANGAL DEVA SHASTRI, M. A., D. Phil.

---

THE

# DWAITA NIRNAYA SIDDHANTA SANGRAHA

---

Published by

The Superintendent, Printing and Stationery,

Government Press, Allahabad.

---

Printed by K. B. Pawagi

at the Hitchintak Press, Ramghat, Benares City.

---

1937.

श्रीः

# द्वैतनिर्णयसिद्धान्तसंग्रहः

श्रीमन्मीमांसक भानुभट्ट प्रणीतः

न्यायव्याकरणाचार्यमीमांसकशिरोमणि श्रीसूर्यनारायण-
शुक्ल संपादितः ।

---

THE

# DWAĪTA NIRṆAYA SIDDHĀNTA SAṄGRAHA

BY

BHĀNU BHAṬṬA.

Edited by

Pt. Surya Narayan Shukla,
*Professor Govt. Sanskrit College, Benares.*

---

1937.

## निवेदनम्-

अथायं प्रकाशमुपनीयते व्रतादिनिर्णयपरो द्वैतनिर्णयसिद्धान्तसंग्रहोनाम निबन्धो विदुषां प्रमोदमाधातुम्। अस्य प्रणेता सुगृहीतनामधेयत्रिस्थलीसेत्वादिनिबन्धप्रणेतृनारायणभट्टस्य प्रपौत्रः विधिरसायनदूषणशास्त्रदीपिकाप्रकाशादिप्रणेतृशङ्करभट्टस्य पौत्रः मयूखप्रणेतृनीलकण्ठभट्टस्य पुत्रः सुगृहीतनामधेयो भानुभट्टो नाम। अस्मिन् ग्रन्थे प्रायो भूयः प्रचलितानां व्रतानां निर्णयः साधु कृत इति लघुरप्ययं ग्रन्थो विदुषामानन्दवर्धन इति मनसि निधाय वाराणसेयराजकीयसंस्कृतपाठशालाध्यक्ष - महामहोपाध्याय - प्राच्यप्रतीच्योभयदर्शननिष्णातयोगिराज पं० श्री गोपीनाथकविराज एम० ए० महोदया मामेतत्सम्पादनायाज्ञापितवन्त इति तदीयाज्ञामनुरुध्य एनं संपादयन् वाराणसेयसरस्वतीभवनपुस्तकालयस्थं द्वैतनिर्णयसिद्धान्तसंग्रहस्य पुस्तकद्वयमुपयोगितयावलम्बितवान्।

तत्रादिमं पञ्चमसंग्रहस्य चतुर्विंशतितमेन वेष्टनाङ्केनाङ्कितं १९५१ वैक्रमसंवत्सरे मेवाधरमिश्रेण लिखितं नानाविधपुस्तकसंग्रहरसिक बाबू गोविन्ददासेन सरस्वतीभवनाय दत्तं नातीव शुद्धं (क) संज्ञया मया व्यवहृतम्। यस्य २४७ पृष्ठानि प्रतिपृष्ठं १६ पङ्क्तयः प्रतिपङ्क्ति १५ अक्षराणि सन्ति।

द्वितीयं च पञ्चमसंग्रहस्य एकविंशतितमेन वेष्टनाङ्केनाङ्कितमनिर्दिष्टलेखकालमपि सार्द्धशतवर्षात्प्राक्काले लिखितमिव संभाव्यमानं शुद्धं (ख) संज्ञया मया व्यवहृतम्। यस्य ७४ पत्राणि १४८ पृष्ठानि प्रतिपृष्ठं ९ पङ्क्तयः प्रतिपङ्क्ति ४० अक्षराणि सन्ति।

तत्र तावत् द्वैतनिर्णयनाम्ना प्रसिद्धानि मयोपलब्धानि त्रीणि पुस्तकानि । तत्रैकं नरहरिकृतं मिथिलायां प्रकाशमुपगतम् । द्वितीयं वाचस्पतिमिश्रकृतं मयैव संपादितम् । तृतीयं शङ्करभट्टकृतं पूर्वोक्त पुस्तकद्वयापेक्षया गुरुशरीरं मन्निकटस्थम् । तत्र तृतीयस्यास्यैव सारभूतोयं द्वैतनिर्णयसिद्धान्तसंग्रहाख्यो निबन्धो भवतां दर्शनेनात्मानं पावयितुं दृग्गोचरो भवति ।

तदिदानीमेतत्प्रकाशनेन हेमाद्रिपराशरमाधवस्मृतिचन्द्रिकादिमहानिबन्धानां निर्णयसिन्ध्वादिमध्यमनिबन्धानां च केषांचिद् दुर्लभतया केषांचिद् बहुमूल्यतया बृहच्छरीरतया वा व्रतादिविषये संशय्य निर्णेतुमसमर्थानां विदुषां बहूपकृतं स्यादिति मन्यमानः पूर्वनिर्दिष्टेषु वाराणसेयराजकीयसंस्कृतमहाविद्यालयाध्यक्षेषु गृहीतावकाशेषु सांप्रतं वाराणसेयराजकीयसंस्कृतमहाविद्यालयाध्यक्षतामुपगतानां वाराणसेयराजकीयसंस्कृतमहाविद्यालयीयपरीक्षाध्यक्षाणां डाक्टर श्री मङ्गलदेवशास्त्रि, एम. ए. महोदयानामेतत्संपादनेन मयि संतोषमाविष्कुर्वतां कृतज्ञतां वहन्नुपहराणि श्रीविश्वेश्वरचरणकमलयोरिदं ग्रन्थरत्नमिति ।

काशी
रामनवमी
१९९४ सं० वै०

विदुषां वशंवदस्य
सूर्यनारायणशर्मशुक्लस्य

# सूचीपत्रम्

ॐ

श्रीमन्मीमांसकभानुभट्टविरचितो

# द्वैतनिर्णय सिद्धान्त संग्रहः ।

लक्ष्मीनारायणं नत्वा सीतया सहितं रघुम् ।
गङ्गायुतं नीलकण्ठगुरोः पादाम्बुजं तथा ॥ १ ॥
पितामहकृतद्वैतनिर्णयार्थस्य संग्रहः ।
नीलकण्ठात्मजेनेह क्रियते भानुनाधुना ॥

## तत्रादौ नवरात्रसिद्धान्तः ।

नवरात्रव्रते च देवीपूजनं प्रधानम् । उपवासादि तु अङ्गम् । कर्तृगुणत्वेन श्रवणात् । तथाच—हेमाद्रौ मदनरत्ने च व्रतखण्डे भविष्ये—

एवञ्च विन्ध्यवासिन्यां नवरात्रमुपोषितः ।
एकभुक्तेन (१) नक्तेन स्वशक्त्याऽयाचितेन वा ॥
अथवा नवनक्तैश्च नवरात्रं समापयेदिति ।

अत्र यद्यपि—उपवासस्यैव कर्तृगुणत्वं श्रूयते तथापि स्वशक्त्याऽयाचितेन वेत्युपवासाशक्तावयाचिनादेर्विधानात्तेषामपि कर्तृगुणत्वमेव बोध्यम् । अत्र पुनर्नक्तविधानात्तस्यैकभक्तापेक्षया मुख्यत्वद्योतनार्थम् । अन्यथा तस्य वैयर्थ्यं स्यात् । अत्र यानि—

(१) आदर्शपुस्तकद्वयेऽपि सर्वत्र 'एकभक्त' इति दृश्यते ।

अमायुक्तैव कर्तव्या-प्रतिपच्चण्डिकार्चने ।
न ग्राह्या परसंयुक्ता शुद्धसंतानकाङ्क्षिभिः ॥

इत्यादीनि—द्वितीयायोगनिषेधकानि—

अमायुक्ता न कर्तव्या प्रतिपत्पूजने मम ।
मुहूर्तमात्रा कर्तव्या द्वितीयादिगुणान्विता ॥

इत्यादीन्यमायोगनिषेधकानि—तान्युभयविधान्यपि निर्मूलानि । समूलत्वेपि परस्परविरोधादनिर्णायकानि तथापि द्वितीयायुता पूर्वाह्णव्यापिनी नवरात्रारम्भे प्रतिपद् ग्राह्या । तथाच देवीपुराणे—

आश्विनस्य सिते पक्षे प्रतिपत्सु यथाक्रमम् ।
सुस्नातस्तिलतैलेन पूर्वाह्णे पूजयेच्छिवाम् ॥ इति ।

डामरकल्पे नवमाध्याये—

आश्विनस्य सिते पक्षे प्रतिपत्सु यथाक्रमम् ।
सुस्नातस्तिलतैलेन पूर्वाह्णे पूजयेच्छिवाम् ॥
प्रतिपद्याश्विने मासि शुद्धेऽविद्धेऽथ भद्रया ।
पुण्याहवाचनं कृत्वा जपं पश्चात्समारभेत् ॥

अत्र बहुवचनात्क्रमविधानाच्च छत्रिन्यायेन प्रतिपच्छब्दः प्रतिपदादितिथिनवके गौणः । अत एव रुद्रयामले—

प्रत्यहं पूजनं कुर्यात् त्रिकालं भक्तितत्परः ।
अष्टम्यां जागरं चैव महापूजनपूर्वकम् ॥

इत्यादिना प्रत्यहं त्रिकालपूजनविधानात् प्रातःकालस्यापि पूजाकालत्वं सिद्धम् । तस्माद् द्वितीयायुता पूर्वाह्णव्यापिन्येव ग्राह्या ।

तदभावे पूर्वैवेति सिद्धान्तः । नच त्रिकालपूजाविधानान्मध्याह्न-सायाह्नयोरपि प्रधानकालत्वात्तद्व्यापिन्येव ग्राह्येति भ्रमितव्यम्, प्रारम्भदिने विहितपूर्वाह्नपूजाबाधापत्तेरिति तयोर्गौणकालविधिपरत्वे-नाप्युपपत्तेः । एवं रात्रिकालशास्त्राण्यपि । नच वैपरीत्यम्, उत्तरभावित्वेन तेषामेव तथात्वौचित्यात् । तदुक्तं मण्डनेन—"स्वकालादुत्तरो गौणः कालः सर्वस्य कर्मण" इति । अत्र चित्रा-वैधृतियोगे तदन्ते कलशस्थापनं कार्यम् । तथा च—

स्मृतिः—

त्वाष्ट्रवैधृतियुक्ता चेत्प्रतिपच्चण्डिकार्चने ।
तयोरन्ते प्रकर्त्तव्यं कलशारोपणं गृह ॥ इति ।

त्वाष्ट्रं चित्रा ।

केचित्तु—"अश्वनीराजनं कुर्यात्क्षिप्त्वा चित्रां च वैधृतिम्" इत्यनेनैकवाक्यतालाघवादश्वनीराजनाङ्गविषय एवायं निषेधो न देवी-पूजाङ्गकलशस्थापन इत्याहुः । तन्न—नीराजनविधौ कलशस्थापन-स्यैवाभावात् ।

अश्वयुजि शुक्लपक्षे स्वातीयुक्ते शुभे दिने ।
इति स्वस्त्ययनं कार्यं तदा चैषां दिने दिने ॥

इत्युपक्रम्य शान्तिः ।

धान्यं भल्लातकं कुष्टं बचासिद्धार्थकास्तथा ।
पञ्चवर्णेन सूत्रेण ग्रन्थिं तेषां च बन्धयेत् ॥
वायव्यैर्वारुणैः सौरैः शाक्रैर्मन्त्रैः सवैभवैः ।
वैश्वदेवैस्तथाग्नेयैर्होमः कार्यो दिने दिने ॥

तुरङ्गा रक्षणीयास्तु पुरुषैः शस्त्रपाणिभिः ।
नच ताड्याः क्वचिच्चात्र नच वाह्याः कथञ्चन ॥ इति ।

गजपूजापि—

बद्धप्रतिसरान्पश्च गजाश्वान्समलंकृतान् ॥
भ्रामयेन्नगरे नित्यं नन्दिघोषपुरस्कृतान् ॥

इत्यादिना प्रतिपदादिनवमीपर्यन्तं पूजा कार्या विस्तरस्तु तातचरणकृते समयमयूखे ज्ञेयः । यदा तु अहोरात्रे चित्रावैधृतियोगस्तदोत्तरार्द्धे स्थापनं कार्यम् ।

आश्विनस्य सिते पक्षे योगे वैधृतिचित्रयोः ।
पूर्वमर्द्धं परित्यज्य कर्त्तव्या चोत्तरे क्रिया ॥

इति स्मृत्यन्तरात् । तातचरणैस्तु—निर्मूलतोक्ता एतेषाम् । अत्र च षड्रात्रचतूरात्रव्यतिरिक्ताः सप्तरात्रादिपक्षा उक्ताः तथाच—धौम्यः—

अथवा—नवरात्रं च सप्तपञ्चत्रिकादि वा ।
एकभुक्तेन नक्तेनायाचितोपोषितैः क्रमात् ॥

आदिशब्देनाष्टरात्रैकरात्रद्विरात्रपक्षा ग्राह्याः । तेनैकभुक्तादीनां सप्तस्वपि पक्षेषु सम्बन्धो न यथाक्रमं चतुर्ष्वेवेति सिद्धम् । आद्योभविष्ये—

आद्या द्वितीया तृतीया चतुर्थी च नराधिप ।
एतास्तु एकभुक्तेन प्रवदन्ति मनीषिणः ।
पञ्चमी च तथा षष्ठी सप्तमी चाष्टमी तथा ।
उपवासपरो भूत्वा पूजयेच्चण्डिकां बुधः ॥ इति ।

रुद्रयामले प्रकारान्तरेणाष्टरात्रपक्ष उक्तः—

दुर्गोत्सवे स्मृतं देव उपवासस्य सप्तकम् ।
अष्टमे दिवसे होमस्ततः किञ्चित्तु भक्षयेत् ॥

सप्तरात्रपक्ष एवायमष्टम्यां भक्षणाधिक्येन विधीयते-वा । पञ्चरात्रत्रिरात्रद्विरात्रपक्षा विशिष्योक्ता भविष्ये—

एकभुक्तस्तु पञ्चम्यां षष्ठ्यां नक्तं प्रवर्तयेत् ।
अयाचितस्तु सप्तम्यामष्टम्यां तु उपोषितः ॥
नवम्यां पारणं कुर्यादित्येवं पञ्चरात्रकम् ।
त्रिरात्रं वापि कर्त्तव्यं सप्तम्यादिदिनत्रये ॥
अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम् ।
पूजयित्वोपवासेन विशोको जायते नरः ॥ इति ।

उपवासेनेत्युपलक्षणे तृतीया । एकरात्रपक्षोऽष्टमीनवमीमात्रोपवासभेदाद् द्वेधा ।

कन्यासंस्थे रवावीश शुक्लाष्टम्यां प्रपूजयेत् ।
सोपवासो निशार्द्धे तु महाविभवविस्तरैः ॥
यः करोत्युपवासं तु नवम्यां विधिवन्नृप ।
स फलं प्राप्नुयात्सर्वं राजसूयाश्वमेधयोरिति ॥

एषाञ्चैकरात्रादिपक्षाणां तत्तद्वाक्यैः फलसम्बन्धात्काम्यता पूर्वोक्तधौम्यवाक्येन नित्यनवरात्रानुकल्पतया विधानाच्चेषां नित्यतापीत्युभयरूपता । अत्रैकरात्रद्विरात्रयोरुपवास एव श्रुतः । पञ्चरात्रे क्रमेणैकभुक्तादिपञ्चकमष्टरात्रे पूर्वचतुष्के एकभुक्तमेवोत्तरचतुष्के

उपवास एव तथापि सर्वपक्षेषु सर्वेषामेकभुक्तादीनां धौम्यवाक्यादेव सिद्धिर्ज्ञेया । इह हविष्यादिक्रमपि एकभुक्तादिस्थानापत्त्या ज्ञेयम् ।

इदं शारदं वासन्तिकं च "शरत्काले महापूजा क्रियते या च वार्षिकी" इति देवीपुराणात् । वर्षे भवा वार्षिकीतिविग्रहे प्रथमातिक्रमे कारणाभावाद्वाक्यान्तराच्च चैत्रशुक्लप्रतिपदादिनवम्यन्ता पूजा ज्ञेया ।

अत्र सर्वेषामधिकार उक्तो हेमाद्रिमदनरत्नव्रतखण्डे भविष्ये—

स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्विशैः ।
शूद्रैर्भक्तियुतैर्म्लेच्छैरन्यैश्च भुवि मानवैः ।
स्त्रीभिश्च कुरुशार्दूल सौभाग्यार्थं नराधिप । इति ।

म्लेच्छाः शवरपुलिन्दकिरातादयः । अन्येऽनुलोमप्रतिलोमजाः ।

यावज्जीवं नरः स्नात्वा नवरात्रं महाव्रतम् ।
कुरुते चण्डिकाप्रीत्यै भुक्तिं मुक्तिं च विन्दति ॥

नारदीयवाक्यात् यावज्जीवाधिकार उक्तस्तथापि तेनैव—

नववर्षाणि यावच्च नारी स्नानपरायणा ।
दुर्गापूजादिकं कृत्वा व्रतान्तं तु समाचरेत् ॥

इत्युक्तत्वान्नववर्षोत्तरं समापनीयमित्यनुकल्पः यथा-यावज्जीवानुकल्पोऽग्निहोत्रे त्रिंशद्वर्षानुष्ठानम् ॥ देवीपुराणे—

अयाची त्वथवैकाशी नक्ताशी त्वथ वाग्वदः ।
प्रातः स्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः ॥

शिवा च शिवश्च शिवौ तयोरित्यर्थः । प्रातर्मध्यापराह्णेषु निशि पूजा तदा चतुर्थी स्वकुलदेवतापि पूज्येत्युक्तं व्रतखण्डे—

यस्य यस्य हि या देवी कुलमार्गेण संस्थिता ।
तेन तेन च सा पूज्या बलिगन्धानुलेपनैः ॥
नैवेद्यैर्विविधश्चैव पूजयेत्कुलमातरम् ।

संख्यायुक्तकन्यापूजोक्ता स्कान्दे—

एकैकां पूजयेत्कन्यामेकवृद्ध्या तथैव वा ।
द्विगुणां त्रिगुणां वापि प्रत्येकं नवकं तु वा ॥

प्रत्येकमिति देहलीदीपवदुभयान्वयि । तेन प्रत्यहं कन्याद्वयं त्रयं नवकं वा पूजयेदित्यर्थः । रोगरहिता गन्धादिप्रीतियुक्ता सुरूपा स्वसगोत्रापि, पूज्या, कामभेदेन पूजोक्ता स्कान्दे—

ब्राह्मणी सर्वकार्यार्थे जयार्थे नृपवंशजा ।
लाभार्थे वैश्यवंशोत्था सुतार्थे शूद्रवंशजा ॥
दारुणे त्वन्त्यजातीनां पूजयेद्विविधां नरः । इति ।

एकवर्षाद्यावत्षोडशवर्षं नामान्युक्तानि धौम्येन—कन्या सरस्वती त्रिमूर्तिः वालिका सुभगा उमा मालिनी मातङ्गिका कामसंकर्षिणी अपराजिता इन्द्राणी क्रतुमुखी महालक्ष्मी मायिका क्षत्रजा अम्बिका । इयञ्च ऋतुदर्शनोत्तरं न पूज्या । दुर्गापूजा यन्त्रे प्रतिमादौ वा कार्या । तद्विस्तरः समयमयूखे द्रष्टव्यः ।

अत्र होमे त्रयः पक्षाः अष्टम्यामेवारम्भसमाप्ती, नवम्यामेव वा ते, अष्टम्यामारम्भो नवम्यां समाप्तिरिति । धौम्यः—"होमस्तत्र प्रकर्त्तव्यः स्वमन्त्रेण जयार्थिभिः" स्वमन्त्रो गुरूपदिष्टो, जातवेदस इति वा, नवाक्षरो वा, नमो दैव्यै महादेव्यै इत्यादि वा, अथवा सप्तशती-श्लोकैर्वेति, पञ्च पक्षा वैकल्पिका भवन्ति । होमद्रव्याणि नारदीये—

तिलाज्यकुसुमादीनि मधुपायसशर्कराः ।
हविर्द्रव्याणि जुहुयाद्दुर्गाष्टम्यां विशेषतः ॥

अत्र यथाकुलाचारं पूजा होमबलिपक्षव्यवस्था ज्ञेया । अत्र "पूजनीया जनैर्देवीत्युपक्रम्य स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्विशैः। स्त्रीभिश्च कुरुशार्दूलेति" प्रधाने स्त्रीशूद्रयोरप्यधिकारोक्तेस्तदङ्गहोमेप्यधिकारसिद्धौ समन्त्रकहोमो विप्रद्वारा कारणीयः "अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" इति ब्रह्मपुराणात् । पराशरः—

उपवासो व्रतं होमस्तीर्थस्नानजपादिकम् ।
विप्रैः सम्पादितं यस्य सम्पन्नं तस्य तत्फलम् ॥

यदापि होमे पौराणो मन्त्रः करणं तदापि विप्रद्वारैर्भवति । पुराणाध्ययने तस्यानधिकारात् । यत्र तु साक्षाद्वचनं तत्रैव तन्मन्त्रोच्चारणं भवति नान्यत्र । यत्तु—पराशरः—

दक्षिणार्थं तु यो विप्रः शूद्रस्य जुहुयाद्धविः ।
ब्राह्मणस्तु भवेच्छूद्रः शूद्रस्तु ब्राह्मणो भवेत् ॥ इति ॥

तद्यो विप्रः शूद्राद्दक्षिणामादाय वैदिकमन्त्रैर्जुहोति तस्यैव दोषो न शूद्रस्येति व्याख्यातं माधवाचार्यैः । अत्र व्याख्यायां वैदिकैरित्युक्त्या पौराणे न दोष इति सूचितम् 'अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते' इत्यपि पौराणमन्त्रविषयमेव । बलिदाने विशेषो नारदीये ।

मेषाश्वमहिषादीनामलाभे पैष्टिकः पशुः ।
देयो देव्यै विधानेन यद्वा कूष्माण्डकं फलमिति ॥

अलाभो लोकविद्विष्टस्याप्युपलक्षणम् । 'अस्वर्ग्यं लोकविद्विष्टं

धर्म्यमप्याचरेन्न तु' इति वचनात्। एतद्व्याख्या विज्ञानेश्वरेण कृता धर्म्यमपि वेदविहितमपि लोकनिन्दितं न चरेत् यस्मादस्वर्ग्यं स्वर्गजनकं न भवतीति। यथा मधुपर्कादौ गोवधादिकमिति दिक् ॥

इति श्रीभट्टवंशावतंसमीमांसकभट्टनीलकण्ठात्मजभट्टभानुकृते द्वैतनिर्णयसिद्धान्तसंग्रहे नवरात्रनिर्णयः समाप्तः।

## अथात्र पारणानिर्णयः।

तत्र शुद्धनवम्यां पारणा कार्येति केचित्। तथाच ब्रह्माण्डपुराणे—

आश्विने शुक्लपक्षे तु नवरात्रमुपोषितः।
नवम्यां पारणां कुर्याद्दशमीसहिता न चेत्।
दशमीसहिता यत्र पारणे नवमी भवेत्।
सप्तजन्मकृतं पुण्यं तत्क्षणादेव नश्यति ॥

तथा च तत्रैव 'वासन्ते नवरात्रे तु पूज्या स्याद्रक्तदन्तिका' इत्युपक्रम्य—

नवम्यां वा विशालाक्षि कार्या होमादिकाः क्रियाः।
पारणं च प्रकुर्वीत देवीपूजनपूर्वकम् ॥
दशम्यां पारिता देवी कुलनाशं करोति हि।
तस्मात्तु पारणं कार्यं नवम्यां विबुधाधिप ॥

इत्युपसंहृतम्—तन्न युक्तिसहम् यदा त्रिमुहूर्ताष्टमी परेद्युर्नवमी-सत्त्वमसत्त्वं वा। तदा त्रिमुहूर्त्ताष्टमीयुतनवम्यां पारणे सति नित्य-वदाम्नातोऽष्टम्युपवासो बाध्येत। न च सप्तमीविद्धायामेव कार्यः—

अष्टमी नवमीविद्धा नवमी चाष्टमीयुता ।
उमामहेश्वरो योगः शिवशक्तिमहोत्सवे ॥

इत्यादि पाद्मादिवचनैर्नवमीविद्धाया एवाष्टम्या ग्राह्यत्वात् ।

अत्र केचित्—ईदृशोदाहरणे दशमीपारणानिषेधकानि वचनानि नित्यवदाम्नाताष्टम्युपवासविधिना बाध्यन्ते । ननु परेद्युर्नवमीसत्त्वपक्षेऽवशिष्टनवम्यामेव पारणास्त्विति चेन्न—दशमीविद्धायां तस्यां तन्निषेधात् । न च दशमीनिषेधबाध इव अस्यापि बाध इति वाच्यम्,(१)सामान्यविधिप्राप्तप्रातःकालीनपारणाकालप्रविष्टदशमीयुतनवमीनिषेधप्रवृत्तेरङ्गीकारात्(२)। यत्तु—वेधपदश्चात्र योगमात्रपरं न त्रिमुहूर्त्तवेधपरम-प्रयोजकत्वात् तादृशदशमीवेधस्यापरिहार्यत्वे पारणाऽकरणाशङ्कापत्तेश्च (३) मुख्यकाले प्राप्त्यभावादिति, तन्न गौणकालेऽपि नवम्यां पारणाविधेः पारणाकालप्रातरवच्छिन्नदशमीविषयस्य दशमीपारणनिषेधस्य चाप्रवृत्तेरिति । एवं सति नवम्युपवासविधिनापि तेषां बाधोऽस्तु सकृत्प्रवृत्तायाः किमवगुण्ठनेनेति न्यायात् । नवमीपारणा-

---

( १ ) 'सर्वेषामुपवासानां प्रातरेव हि पारणा' इति प्राप्तपारणाकाले दशमीनिषेधः प्रवर्तते तदुत्तरकाले प्राप्तेरेवाभावादित्यर्थः ।

( २ ) त्रिमुहूर्तमध्ये नवमीदशमीयोगे सति दशमीपारणानिषेधः प्रवर्तते । अत्रैव दशमीयुतनवमीपारणानिषेधोऽपीति फलितोऽर्थः ।

( ३ ) यत्र नवमीत्रिमुहूर्तादुत्तरं दशमी तत्र दशमीविद्धा नवमी भवति तत्र पारणाविधिर्न कोऽपि प्रवर्तते नवमीपारणाविधिर्न प्रवर्तते दशमीविद्धाया निषेधात् दशमीपारणाविधिरपि न प्रवर्तते प्रातःकालयोगाभावादतः पारणानापत्तिरित्यर्थः ।

विधीनां तु पूर्वेद्युरष्टमीविद्धनवम्यां तदुपवासे जाते अवशिष्टपरदिन-नवम्यां पारणा कार्येति विषय इति। एवं 'सर्वेषामुपवासानां प्रातरेव हि पारणा' इति सामान्यवाक्यस्योपोष्यतिथ्यन्तविधिना बाधितस्य नवम्यामेव पारणा कार्येति विधीनां प्रतिप्रसवविधित्वाल्लाघवं भवति। दशमीविद्धनवमीनिषेधानां का गतिरिति चेच्छृणु—यदा परेद्युस्त्रिमुहूर्त्त-न्यूना नवमी तदा 'वेध्यापि त्रिमुहूर्त्ता स्यान्न न्यूना वेधमर्हति' इति माधवोक्तेस्त्रिमुहूर्त्तन्यूनाया अविद्धत्वान्नवमीपारणाविधिः प्रवर्तते। अयमेव दशमीपारणानिषेधविषयः। यदा त्रिमुहूर्त्ता ततोऽधिका वा तदा दशमीविद्धनवमीनिषेधप्रवृत्तेरुपोष्यतिथ्यन्ते दशम्यामेव पारणमिति सिद्धम्। एतेन प्रातरेव पारणाविधानात्तत्कालीनदशम्यामेव पारणा-प्राप्तेर्दशमीविद्धनवमीनिषेधः प्रातःकालीनदशमीयोगपर एव न सायङ्कालीनत्रिमुहूर्त्तवेधपर इत्यपास्तम्। तिथ्यन्तपारणाविधिना प्रातःकालोत्तरदशम्यामपि पारणाप्राप्तेः। अन्यथा 'यामत्रयोर्ध्व-गामिन्यां प्रातरेव हि पारणा' इतिविधेस्तिथ्यन्तपारणाविध्यपवादत्वं न युज्येत। तत्प्रसक्तेरेवाभावात्। वेधपदं लक्षणया योगपर-मित्यप्ययुक्तमनुपपत्त्यभावादिति। यदा तु दशमीविद्धनवमीनिषेध-स्यापि दशमीनिषेध एव तात्पर्यं तदा त्रिमुहूर्त्तन्यूनायां ततोऽधि-कायामपि नवम्यामेव पारणा न दशम्यां तिथ्यन्तविधेरपवादात्। एवञ्च नवमीविधिदशमीनिषेधयोर्यामत्रयात्पूर्वं नवम्यामेव प्रवृत्तिर्युक्ता तदूर्ध्वगामिन्यां तु पूर्वोक्तयामत्रयोर्ध्वगामिन्यामित्यनेनैव प्रातः पार-णासिद्धेरनयोस्तत्र प्रवृत्तिर्व्यर्था स्यादिति सर्वं सुस्थम्। नच नवम्यु-पवासविधेरेव श्रवणात्कथं दशमीपारणानिषेधानां बाध इति वाच्यम्—

अथ चतुर्थी ।

'अथ हेमाद्रिमते विनायकव्रते पूर्वा तथा च ब्रह्मवैवर्ते—

चतुर्थीसंयुता या तु सा तृतीया फलप्रदा ।
चतुर्थी च तृतीयायां महापुण्यफलप्रदा ।
कर्त्तव्या व्रतिभिर्वत्स गणनाथसुतोषिणी ।

तद्भिन्ना युग्माग्नियुगभूतानामितियुग्मवाक्यात्परेति सिद्धान्तः ।
यदपि भविष्यब्रह्मवैवर्त्तयोः—

चतुर्थीसंयुता कार्या तृतीया च चतुर्थिका ।
तृतीयकयुता नैव पञ्चम्यां कारयेत्क्वचित् ॥

इति तदपि गणपतिव्रतविषयकमेव पूर्ववचनैकवाक्यत्वात् ।
अत्र माधवमतम्—

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्थिका ।
त्रयोदशी चतुर्थी चोपोष्याः स्युस्तु परान्विताः ॥

इति भृगुवाक्यात्परोपोष्येत्यप्युक्तम् ।

द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी ॥
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी ।

इति बृहद्वशिष्ठवाक्यात् पूर्वोपोष्या पूर्वोक्तब्रह्मवैवर्त्तवाक्यैकवाक्यत्वाद्विनायकोपवासव्रते पूर्वा— अन्यदैवत्योपवासे परेति वाक्यद्वयव्यवस्थेति । अत्रोपवासभिन्ने उभयदैवत्यव्रते किं स्यादिति नोक्तम् । तत्रोच्यते शुक्लपक्षे तिथिर्ग्राह्येत्यादिवाक्याद्व्यवस्था

अपेक्षितविधानात्। अतस्तस्य दशमीमात्रविषयत्वाभिधानमुपेक्ष्यमिति।

इति भानुभट्टकृते द्वैतनिर्णयसिद्धान्तसंग्रहे
चतुर्थीनिर्णयः समाप्तः ॥

## अथ पञ्चमी ॥

अत्र हेमाद्रिणा 'पञ्चमी तु तथा कार्या चतुर्थीसहिता विभो' इति स्कन्दपुराणवाक्य 'पञ्चमी तु प्रकर्तव्या षष्ठीयुक्ता तु नारद' इति ब्रह्मवैवर्त्तवाक्ययोः कृष्णशुक्लपक्षभेदेन व्यवस्थोक्ता—

शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥

इतिनिगमवाक्यात् । सा च स्वयमेव दूषिता । अन्ये त्वेवमाहुरिनिग्रन्थेन तथाहि पञ्चम्याश्चतुर्थीयुतत्वाभिधानमुपवासविषयम् ।

एकादशी तथा षष्ठी अमावस्या चतुर्थिका ।
उपोष्या परसंयुक्ताः पराः पूर्वेण संयुताः ॥

इति बृहद्वसिष्ठवाक्येन पूर्वोक्तस्कान्दवचस उपसंहारात् । भवन्मतेपि कृष्णपक्षविषयत्वेनोपसंहारस्याविशिष्टत्वात् तस्मादुपवासे पक्षद्वयेपि पूर्वा तद्भिन्नकार्ये परेति । माधवाचार्यैर्दूषितम्— एवं श्रूयते 'स्कन्दोपवासे स्वीकार्या पञ्चमी परसंयुता' इति ।

एवञ्चैतद्वाक्य ( १ ) शेषात्स्कन्दोपवासे परा । अन्येषु सर्वकार्येषु पूर्वेति सिद्धान्तः । अयञ्च वाक्यशेषो हेमाद्रिणा नोदङ्कितः । एवञ्च वचनान्तरमन्तरेणोक्तसिद्धान्तसिद्धावपि हेमाद्रिलिखितं हारीतवाक्यमुदाहृतम् ।

चतुर्थीसंयुता कार्या पञ्चमी परया न तु ।
दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथाऽसिते ॥

इति पूर्वाह्णस्य कर्मकालत्वेन परदिनानुष्ठानप्राप्तौ तद्बाधाय दैवे कर्मणीति पित्र्यग्रहणस्य वैयर्थ्यप्राप्तौ दृष्टान्तोक्त्यर्थमिति माधवमतमुपसंहृतम् । अत्र दृष्टान्तोक्तिः स्वयं दूषिता यदापि पित्र्ये परेद्युः कर्मकालेऽधिका तदाधिकबाधनाय पित्र्यग्रहणविधिरिति । अयञ्च प्रकारः—

प्रतिपत्सैव विज्ञेया या भवेदापराह्णकी ।
दैवं कर्म तथा ज्ञेयं पित्र्यं वा मनुरब्रवीत् ॥

इतिव्यासवचनव्याख्याने प्रतिपत्प्रकरणे स्वयमेवोक्तः । अतः पूर्वं ग्रन्थविरोधादिह दृष्टान्तोक्तिरयुक्तेति दिक् । पञ्चमीविषयो हेमाद्युक्तो न विनिर्णयः । माधवोक्तस्तु सम्यक् सः, किञ्चित्तत्रापि नोमतम् ।

इति श्रीमीमांसकभट्टवंशावतंसभट्टनीलकण्ठात्मजभट्टभानु
कृते द्वैतनिर्णयसिद्धान्तसंग्रहे पञ्चमीनिर्णयः ॥



---

( १ ) पञ्चमी तु प्रकर्तव्या इति ब्रह्मवैवर्तवाक्यशेषादित्यर्थः ।

## अथ जन्माष्टमी ।

श्रावणे बहुले पक्षे कृष्णजन्माष्टमीव्रतम् ।
न करोति नरो यस्तु भवति क्रूरराक्षसः ।
कृष्णजन्माष्टमीं त्यक्त्वा योऽन्यद्व्रतमुपासते ।
नाप्नोति सुकृतं किञ्चिदिष्टापूर्त्तमथापि वा ।
वर्षे वर्षे तु या नारी कृष्णजन्माष्टमीव्रतम् ।
न करोति महाप्राज्ञ व्याली भवति कानने ॥

इति भविष्यपुराणे ऽकरणेऽनिष्टश्रवणादिदं व्रतं नित्यम् । स्कन्दपुराणेऽपि—

ये न कुर्वन्ति जानन्तः कृष्णजन्माष्टमीव्रतम् ।
ते भवन्ति नराः प्राज्ञ व्याला व्याघ्राश्च कानने ।

जयन्ती नित्या काम्या च

प्राजापत्यर्क्षसंयुता श्रावणस्यासिताष्टमी ।
वर्षे वर्षे तु कर्त्तव्या तुष्ट्यर्थं चक्रपाणिनः ॥
शूद्रान्नेन तु यत्पापं शवहस्तस्य भोजने ।
तत्पापं लभते कुन्ति जयन्तीविमुखो नरः ॥

इत्यादि स्कान्देऽनिष्टश्रवणान्नित्या, काम्यापि तत्रैवोक्ता—

महाजयार्थं कुरुतां जयन्तीं मुक्तयेऽथवा ।
धर्ममर्थं च कामं च मोक्षं च मुनिपुङ्गव ।
ददाति वाञ्छितानर्थान्ये चान्येप्यतिदुर्लभा ॥

इति फलविशेषश्रवणात् । विष्णुरहस्येपि—

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।

मुहूर्त्तमपि लभ्येत सोपोष्या सा महाफला।

अत्र सोपोष्या सा महाफलेति तच्छब्दाभ्यामष्टम्या एव परामर्शादष्टम्या एव ऋक्षयोगाज्जयन्तीनाम। तथाच स्पष्टीकृतं विष्णुरहस्ये—

अष्टमी कृष्णपक्षस्य रोहिणीऋक्षसंयुता।
भवेत्प्रोष्ठपदे मासि जयन्तीनाम सा तिथिः।

प्रोष्ठपदत्वञ्चात्र पूर्णिमान्तमासेन ज्ञेयम्।

अत्र केचित् स्कान्देऽकरणेऽनिष्टश्रवणात्केवलाष्टम्युपवासो नित्यः। जयन्त्युपवासोऽपि नित्यः स्कान्द एवाकरणेऽनिष्टश्रवणात्। स च पूर्वोपवासाद्भिन्नः। तस्यैव स्कान्दे फलश्रवणात्काम्यतापि। एवञ्च संयोगपृथक्त्वन्यायादुभयार्थता।

अन्ये तु केवलाष्टम्युपवासो जयन्त्युपवासश्चैक एव। तस्यैवाग्निहोत्रवदुभयार्थत्वम्। ऋक्षयोगे तु ज्योतिष्टोमाङ्गदक्षिणाभूतगवादिषु दोग्ध्रित्वादिवदत्र बुधादिवच्च प्राशस्त्यात्फलातिशयमात्रमिति।

अपरे तु प्रकृतशुद्धाष्टम्युपवासमाश्रित्य जयन्त्याख्यकालोऽत्र फले गुणो विधीयते 'सप्तमे ब्रह्मवर्चसम्' इत्यादिवत्। तेन रोहिणीयोगे फलान्तरमपि बुधसोमवारवदिति। तदुक्तं (१) पद्मपुराणे—

प्रेतयोनिगतानां तु प्रेतत्वं नाशितं नरैः।
यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता॥
किं पुनर्बुधवारेण सोमेनापि विशेषिता इति।

सा चाष्टमी अर्द्धरात्रव्यापिनी ग्राह्या। तदुक्तं भविष्योत्तरे—

---

( १ ) ब्रह्मपुराणे इति ख. पाठः।

मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके ।
शशाङ्के वृषराशिस्थे ऋक्षे रोहिणिसंज्ञके ॥
योगेऽस्मिन्वसुदेवाद्धि देवकीमामजीजनत् ।
तस्मान्मां पूजयेत्तत्र शुचिः सम्यगुपोषित ॥ इति ।

अत्र पूजयेदिति पूजाविधानात्सैव प्रधानम् । उपवासस्तदङ्गं शुचित्ववत्कर्तृगुणत्वेन श्रवणादिति तातचरणाः ।

अत्र केवलाष्टमी षोढा । पूर्वेद्युरेव निशीथयोगिनी; परेद्युरेव तादृशी, उभयेद्युर्वा निशीथे, नोभयेद्युर्वानिशीथे, उभयेद्युरेक देशे तत्रापि साम्येन वैषम्येण चेति । तत्रान्यतरदिने चेत्सैव ग्राह्या । वैषम्येणैकदेशेऽधिका उभयोर्नोभयोः साम्येनैकदेश उभयोः इत्येतेषु निर्णयो निगमे वसुरन्ध्रयोरितियुग्मवाक्यात् ।

मुहूर्त्तेनापि संयुक्ता संपूर्णा साष्टमी भवेत् ।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥

इति पाद्मवचने नवमीयोगप्राशस्त्यात्तत्रैव–

वर्जनीया प्रयत्नेन सप्तमीसंयुताष्टमी ।
स ऋक्षापि न कर्त्तव्या सप्तमीसंयुताष्टमीति ।

सप्तमीयुतानिषेधात्प्रातः संकल्पकाले सत्त्वाच्च परैवेति ।

यस्मिन्वर्षे ऋक्षयोगस्तदा सप्तधा भिद्यते । पूर्वेद्युरेव निशीथे रोहिणायुक्ता परेद्युः केवलाष्टमी, निशीथे, परेद्युरेव वा निशीथे रोहिणीयुक्ता पूर्वेद्युः केवलाष्टमी, तत्र उभयेद्युर्वा सऋक्षा निशीथे, पूर्वेद्युरेव निशीथात्पूर्वं रोहिणी, उत्तरेद्युरेव निशीथोर्ध्वंरोहिणी, उभयेद्युर्वा निशीथं विहाय रोहिणीयोगः, पूर्वेद्युरष्टमी रोहिणी च

निशीथोर्ध्वं प्रवृत्ता उत्तरेद्युश्च निशीथात्प्रागेव समाप्तेति सप्तधा।
तत्राद्यपक्षे पूर्वैव। तथाच भविष्यविष्णुधर्मोत्तरयोः—

रोहिण्यामर्द्धरात्रे च यदा कृष्णाष्टमी भवेत्।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम्।
सोपवासो हरेः पूजां कृत्वा तत्र न सीदति।
अर्द्धरात्रे तु योगोऽयं तारापत्युदये तथा।

वह्निपुराणेपि—

सप्तमीसंयुताष्टम्यां निशीथे रोहिणी यदि।
भविता साष्टमी पुण्या यावच्चन्द्रदिवाकरौ॥
समायोगे तु रोहिण्या निशीथे राजसत्तम।
समजायत गोविन्दो बालरूपो चतुर्भुजः।
तस्मात्तं पूजयेत्तत्र यथावित्तानुसारतः। इति।

यदोत्तरेद्युरेव निशीथे रोहिणीयुक्तोभयेद्युर्वा तदोत्तरैव।
तथा च—ब्राह्मे—

मुहूर्त्तेनापि संयुक्ता संपूर्णा साष्टमी भवेत्।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा॥ इति।

'प्रातः संकल्पकाले सत्त्वान्सप्तमीयोगनिषेधाच्च। यदा पूर्वेद्युरेव निशीथात्पूर्वं रोहिणीति चतुर्थे पक्षे त्रैविध्यं उभयेद्युर्निशीथसत्त्वं पूर्वेद्युरेव वा परेद्युरेव वा तत्राद्ययोः पूर्वा—

तस्मात्कृष्णाष्टमी पूज्या सप्तम्या नृपसत्तम।
रोहिणी संयुतोपोष्या सर्वाघौघनिवारिणी॥ इत्याग्निपुराणात्।

तृतीयपक्षे उत्तरा गुणभूतऋक्षवशेन प्रधानभूताष्टम्या

मुख्यकालवर्तित्वबाधायोगात्सप्तमीयोगनिषेधाच्चेति। यदा तूत्तरेद्युरेव निशीथोत्तरं पूर्वं वा रोहिणीयोग इति पञ्चमपक्षस्तदापि त्रैविध्यं दिनद्वयेपि निशीथेऽष्टमो, उत्तरेद्युरेव तत्राष्टमो, पूर्वेद्युरेव वा निशीथेऽष्टमीति। तत्राद्यपक्षयोरुत्तरा। "सऋक्षापि न कर्त्तव्या सप्तमीसंयुताष्टमी" इति ब्रह्मवैवर्तवाक्ये सप्तमीयुताया निषेधात्। तृतीये तु पूर्वैव गुणभूतऋक्षयोगेन मुख्यकालवर्तिन्याः प्रधानभूताष्टम्या बाधायोगात् अन्यथा यदा दिनद्वयेपि न ऋक्षयोगः पूर्वेद्युश्च निशीथेऽष्टमी नोत्तरेद्युर्निशीथे बुधसोमान्यतरवारश्चोत्तरेद्युः तदापि निशीथव्यापिनीं पूर्वां विहाय उत्तरा स्यात् ऋक्षयोगाद्वारयोगस्यापि प्राशस्त्याभिधानात्। यदा पूर्वेद्युर्निशीथोत्तरं परेद्युस्ततः पूर्वमिति दिनद्वयेपि ऋक्षयोग इति षष्ठः पक्षस्तदापि त्रैविध्यम्। उभयेद्युर्निशीथाष्टमी उत्तरेद्युरेव पूर्वेद्युर्वेति। तत्राद्ययोरुत्तरैव।

सप्तमीसंयुताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम।
प्राजापत्यं द्वितीयेऽह्नि मुहूर्त्तार्द्धं भवेद्यदि॥
तदाष्टयामिकं ज्ञेयं प्रोक्तं व्यासादिभिः पुरा॥ इति स्कन्दपुराणात्।

मुहूर्त्तेनापि संयुक्ता संपूर्णा साष्टमी भवेत्।
किं पुनर्नवमीयुक्ता कुलकोटिविमुक्तिदा॥ इति ब्राह्माच्च।

'तृतीये तु पूर्वैव गुणभूतेत्यादिपूर्वोक्तन्यायात्—
प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी।
मुहूर्त्तमप्यहोरात्रे यस्मिन्युक्तं हि लभ्यते।
अष्टम्यां रोहिणीऋक्षं तां सुपुण्यामुपावसेदिति विष्णुरहस्या-

दिवचनेभ्यश्चेति ।

यत्तु–माधवेन स्कान्दमित्युक्तम् । हेमाद्रिणा च-ब्रह्मवैवर्त्तीयमित्युक्तम् ।

उदये चाष्टमी किञ्चिन्नवमी सकला यदि ।
भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्षसंयुता ।
अपि वर्षशतेनापि लभ्यते यदि वा न वा ।

तदप्येवं व्याख्येयम् उदये चन्द्रोदये अर्द्धरात्र इति यावत् । अर्द्धरात्रे स्वल्पाष्टमी नवमी संपूर्णेति । एवञ्च तारापत्युदये सतीत्यनेनैकमूलकल्पनालाघवं भवति । विस्तरस्तु द्वैतनिर्णये समयमयूखे च बोध्यः ।

यदा तु पूर्वेद्युर्निशीथोत्तरं सऋक्षाष्टमी प्रवृत्तोत्तरेद्युश्च सऋक्षापि निशीथात्प्राक्समाप्तेति सप्तमः पक्षस्तदोत्तरैव । प्रातः संकल्पकाले सत्त्वात् । "सप्तमीसंयुताष्टम्यां भूत्वा ऋक्षं द्विजोत्तम । प्राजापत्यं द्वितीयेऽह्नि मुहूर्तार्द्धं भवेद्यदि । तदाष्टयामिकं ज्ञेयम्" इत्यादिस्कान्दाच्चेति दिक् ।

इति श्रीमन्मीमांसकभट्टवंशावतंसभट्टनीलकण्ठात्मजभट्टभानुकृते द्वैतनिर्णयसिद्धान्तसंग्रहेऽष्टमीनिर्णयः ॥

## अथ जन्माष्टमीपारणानिर्णयः ॥

तत्र पूर्वेद्युरर्द्धरात्रव्यापिन्यामुपवासो जात उत्तरेद्युश्च किञ्चिदष्टमी तदाष्टम्यन्ते पारणमिति मुख्यः पक्षः

जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च
पूर्वविद्धैव कर्त्तव्या तिथिभान्ते च पारणम् ॥ इति भृगूक्तेः ।

अत्र बृहद्रथन्तरसामा सोमः कार्य इति वत्त्रिपद बहुव्रीहिणा तिथ्यन्ते भान्ते च पारणमित्यर्थो लभ्यते । केवलरोहिण्युपवासोपि माधवाचार्यैरुक्तः । तथा च वह्निपुराणे 'भान्ते कुर्यात्तिथेर्वापि शस्तं भारत ? पारणम्' इति पृथक् तिथिनक्षत्रनिर्देशः संगच्छते । यदा तु रात्रौ तिथ्यन्तस्तदापि दिवैव पारणा न रात्रौ । तथा च ब्रह्मवैवर्त्ते—

सर्वेष्वेवोपवासेषु दिवा पारणमिष्यते ।
अन्यथा पुण्यहानिः स्याद्दते धारणपारणम् । इति ।

यत्तु गौडनिबन्धे—

न रात्रौ पारणं कुर्याद्दते वै रोहिणीव्रतात् ।
तत्र निश्यपि तत्कुर्याद्वर्जयित्वा महानिशाम् ॥ इति ।

तद्दाक्षिणात्यग्रन्थविरोधात् 'अपि वेदान्तगं रणे' इतिवदपिशब्दस्य स्वार्थतात्पर्याभावादेवोपेक्ष्यम् । अत एव माधवमदनरत्नाभ्यां कृष्णजयन्त्यां रात्रिपारणानिषेध इत्युक्तम् । तस्मादीदृशे विषये दिवैव पारणा न रात्राविति सिद्धम् । यदा तु पूर्वेद्युः निशीथे रोहिणीयोगाज्जयन्त्युपवासस्तत्र जातस्तदोत्तरदिने उभयान्ते दिवैव पारणमिति मुख्यः पक्षः । अन्यतरान्त इति गौणः—तथा च पाद्मे द्वितीयो नारदीये ।

कार्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी ।
तत्रोपवासं कुर्वीत तिथिभान्ते च पारणम् ।
सांयोगिके व्रते प्राप्ते यत्रैकोऽपि वियुज्यते ।
तत्रैव पारणं कुर्यादेवं वेदविदो विदुः ।

यदोभयान्तोऽन्यतरान्तो वाऽर्द्धरात्रे तदुत्तरं वा अन्यतरान्तस्तदाऽर्द्धरात्रे पारणा कार्येति हेमाद्रिः ।

तिथ्यर्क्षयोर्यदा छेदो नक्षत्रान्तमथापि वा ।
अर्द्धरात्रेऽपि वा कुर्यात्पारणं त्वपरेऽहनि ॥

इतिवाक्यात् । मदनरत्नोप्येवमेवाह । अत्रापिशब्दस्य स्वार्थे तात्पर्याभावाद्रात्रेरेवायं प्रतिप्रसवो नार्द्धरात्रस्येति माधव आह । यदा निशीथादर्वाक् उभयान्तोऽन्यतरान्तो वा तदा दिवा मुख्यानुकल्पयोरभावाद्रात्रौ पारणनिषेधादुपवासप्राप्तावयं प्रतिप्रसव इति तदेतन्मतत्रयमप्ययुक्तम् । आद्यमतद्वयेऽपिशब्दस्येत्यादिपूर्वोक्तग्रन्थेन माधवेनैव दूषितम् । माधवमतेपि रात्रेरयं प्रतिप्रसव इति तदप्ययुक्तम् । अर्द्धरात्रपदस्य स्वार्थे तात्पर्याभावात्तत्पदं विहाय वाक्यार्थे सतीत्येवं पर्यवसितम् तिथ्यृक्षयोर्यदा कदाचिच्छेदेऽहनि पारणं कुर्यादिति । अत्र कालादर्शमतमेव स्थापितं द्वैतनिर्णये तदुक्तं तेन । अन्यतिथागमो रात्राविति रात्रिपारणा निषेधमाशङ्क्य-

जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् ।
तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्वीत पारणम् ।

इतिवचनाद्यदाष्टमी परेद्यवि रात्रौ स्यात्तदोत्सवान्तेऽन्यथा तिथ्यन्त इति । तिथिपदमृक्षस्याप्युपलक्षणम् । न च 'यामत्रयोर्द्ध्वं तिथ्यन्ते प्रातरेव हि पारणम् । यामत्रयोर्द्ध्वगामिन्याम्' इति सामान्य वाक्यस्य 'तिथ्यन्ते चोत्सवान्ते वा व्रती कुर्वीत पारणम्' इति । जयन्तीव्रतप्रकरणपठितविशेषवाक्येन बाधात् । एवञ्च-दिवा तिथ्यन्ते सति तदैव पारणम् । रात्रौ तिथ्यन्ते उत्सवान्त इति

निष्कर्षः। विस्तरस्तु तत्रैव ज्ञेयः। "उपोषणं पूर्वदिने जयन्त्यां कृष्णस्य यद्युत्तरवासरे स्यात्०। तिथ्यृक्षयोरन्यतरस्य चान्ते रात्रौ तदा पारणमुत्सवान्त" इति।

इति श्रीमन्मीमांसक भट्टवंशावतंस भट्टनीलकण्ठात्मजभट्टभानुकृते पितामहकृतद्वैतनिर्णयसिद्धान्तसंग्रहेजन्माष्टमी पारणानिर्णयः।

## अथैकादशीवेधानिर्णयः।

भविष्यत्पुराणे—

अरुणोदयकाले तु दशमी यदि दृश्यते।
सा विद्धैकादशी तत्र पापमूलमुपोषणम् (१)॥

सौरधर्मेषु—

आदित्योदयवेलायां प्राङ्मुहूर्त्तद्वयान्विता।
सैकादशीति संपूर्णा विद्धान्या परिकीर्तिता।

स्कान्दे

उदयात्प्राक् चतस्रस्तु नाडिका अरुणोदयः।
तत्र स्नानं प्रशस्तं स्यात्स हि पुण्यतमः स्मृतः।

ब्रह्मवैवर्त्ते

कीदृशस्तु भवेद्वेधो योगो विप्रेन्द्र कीदृशः।

---

(१) तथा—
अरुणोदयवेलायां दिशागन्धो भवेद्यदि।
दुष्टं तत्तु प्रयत्नेन वर्जनीयं नराधिप॥
इति ख० पु० अधिक पाठः।

योगवेधौ ममाचक्ष्व याम्यां दुष्टमुपोषणम् ।
चतस्रो घटिकाः प्रातररुणोदयनिश्चयः ।
चतुष्टयविभागोऽत्र वेधादीनां किलोदितः ॥
अरुणोदयवेधः स्यात् सार्द्धं तु घटिकात्रयम् ।
अतिवेधो द्विघटिकः प्रभासंदर्शनाद्रवेः ।
महावेधोपि तत्रैव दृश्यतेऽर्को न दृश्यते ॥
तुरीयस्तत्र विहितो योगः सूर्योदये सति । इति ।

हेमाद्रौ स्मृतिः ।

निशि प्रान्ते तु यामार्द्धे देववादित्रवादने ।
सारस्वतानध्ययने चारुणोदय उच्यते ॥ इति ।

अत्र कालादर्शेऽरुणोदयवेधदोषो यद्यस्ति तस्मिन्सति वैष्णवैर्नोपोषितव्यमिति प्रतीच्या वर्णयन्तीत्युक्तं परमतं दूषितञ्च । तथा हि—अरुणोदयमारभ्यैकादश्याः सम्पूर्णत्वाभिधानं सम्पूर्णैकादशी फलाय पर्याप्ता न न्यूनेत्येवंपरम् । अरुणोदयनिषेधस्तु कैमुतिकन्यायेन सूर्योदयोर्ध्वं विद्धैकादश्युपोषणनिषेधपरः । निषेधवाक्येषु वैष्णवं स्मार्त्तोपलक्षकमिति । तदेतदयुक्तम् । सूर्योदयोर्ध्वविद्धैकादश्युपवासनिषेधे लक्षणाप्रसङ्गात् । तस्याश्च मानाभावात् । वैपरीत्यस्यापि सम्भवाच्च । कैमुतिकन्यायेन स्तुतिमात्रपरत्वे बहूनां वचनानां वैयर्थ्यं स्यादिति । सकलशिष्टाचारविरोधश्चेति माधवहेमाद्र्योररुणोदयवेधनिषेधो वैष्णवानामितरेषां सूर्योदयवेधनिषेध इति निर्विवादम् । अरुणोदयपरिमाणे तु विवादः तत्र माधवेन—

दशमीशेषसंयुक्तो यदि स्यादरुणोदयः ।
नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतम् ॥

इत्यादिवाक्येषु अरुणोदयपरिमाणं 'चतस्रो घटिकाः प्रातरुणोदयनिश्चय' इति स्कन्दनारदाभ्यामुक्तं गृह्यत इति घटिकाचतुष्टयात्मकारुणोदयेऽर्द्धघटिकादशमीप्रवेशो वेधः घटिकाद्वयप्रवेशेऽतिवेधः सम्पूर्णदशमीप्रवेशे महावेधः । सूर्योदयोत्तरं दशमीप्रवेशे योगः । तथा च ब्रह्मवैवर्त्ते—

योगवेधौ ममाचक्ष्व याभ्यां दुष्टमुपोषणम् ।
चतस्रो घटिका प्रातररुणोदयनिश्चयः ॥
अरुणोदयवेधः स्यात्सार्द्धन्तु घटिकात्रयम् ।
अतिवेधो द्विघटिकः प्रभासदर्शनाद्रवेः ॥
महावेधोऽपि तत्रैव दृश्यतेऽर्को न दृश्यते ।
तुरीयस्तत्र विहितो योगः सूर्योदये सति ॥

इतिसंज्ञाविशेषकरणं दोषाधिक्यप्रदर्शनार्थम् । एवं माधवमते—उदयात्प्राग्घटिकाचतुष्टयमरुणोदयः । तदेतन्न युक्तम्—

उदयात्प्राक् तु या विद्धा मुहूर्तद्वयसंयुता ।
सम्पूर्णैकादशी नाम तत्रैवोपवसेद्गृही ।

इत्यादिस्कान्दादिवाक्येषु मुहूर्त्तद्वयपरिमाणारुणोदयस्योक्तत्वात्तस्य च रात्रिमानभेदेन घटिकाचतुष्टयान्न्यूनाधिकभावस्यापि सम्भवात्तस्यासङ्ग्रहः स्यात् । तथा च तद्बोधकबहुवाक्यविरोधः स्यादिति दूषणान्तरं द्वैतनिर्णय एव बोध्यम् । अत्र च रात्रेः षोडश

मुहूर्त्ताः कल्प्याः न पञ्चदश । तथा चैकादशीप्रकरणे हेमाद्रौ स्मृतिः—

निशि प्रान्ते तु यामार्द्धे देववादित्रवादने ।
सारस्वतानध्ययने चारुणोदय उच्यते ॥ इति

हेमाद्रिणा एतत्स्मृतिवलादर्द्धयामरूप एवात्रारुणोदयोऽङ्गीकृतः । वाक्यान्तरगतानि मुहूर्त्तद्वयमानानि तु रात्रिमानभेदेनैतत्परतयैव योजितानि । पितामहचरणैस्तु रात्रेः पञ्चदशमुहूर्त्तविभागमेवाङ्गीकृत्य मुहूर्त्तद्वयवाक्यमेवाद्दतं हेमाद्रिमतमपि दूषितञ्चेति दिक् ।

इति श्रीमन्मीमांसकभट्टवंशावतंसभट्टनीलकण्ठात्मज-
भट्टभानुकृते द्वैतनिर्णयसिद्धान्त-
संग्रहे एकादशीवेधेऽरु-
णोदयनिर्माण-
निर्णयः ।



## अथ चतुर्दशीद्वैतनिर्णयः ।

तत्र चैत्रश्रावणशुक्लचतुर्दशी पूर्वेद्युः सूर्यास्तोत्तरं प्रविष्टोत्तरेद्युरस्तात्पूर्वमेव समाप्ता तदा पूर्वरात्रिव्यापिनी ग्राह्येति हेमाद्रिमाधवाद्यनुयायिनः । तथाच बौधायनः ।

मधोः श्रावणमासस्य शुक्ला या तु चतुर्दशी ।
सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनी इति ।

अत्रायं निष्कर्षः पूर्वदिनेऽपराह्णव्यापिनी मुख्यत्वेन पूर्वा ग्राह्या । तदभावे सायाह्नव्यापिन्यपि न तु तदभावेऽपि केवलरा-

त्रिमात्रव्यापिन्यपि पूर्वा किन्तु उत्तरैवात्रोपपत्तिः । अत्र पञ्चवाक्यानि 'मधोः श्रावणमासस्य' इति बौधायनीयमेकम् । 'चतुर्दश्याञ्च पूर्णिमे'ति नैगममपरम् ।

तृतीयैकादशी षष्ठी शुक्लपक्षे चतुर्दशी ।
पूर्वविद्धा न कर्त्तव्या कर्त्तव्या परसंयुता ॥"

इति नारदीयं तृतीयम् ।

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी ।
पूर्वविद्धा तु कर्त्तव्या परविद्धा न कस्यचित्

इत्यापस्तम्बीयं चतुर्थम् । पक्षद्वयचतुर्दश्याऽपराह्णव्यापित्वे त्रयोदशीयुतचतुर्दशीविधायकम्—

चतुर्दशी तु कर्त्तव्या त्रयोदश्या युता विभो ।
ममभक्तैर्महाबाहो भवेद्या चापराह्णिकी ॥

दर्शविद्धा न कर्त्तव्या राकाविद्धा कदाचनेति स्कान्दं पञ्चमम् । एवञ्च—कृष्णा पूर्वा शुक्लोत्तरेति सिद्धे उभे अप्यपराह्णव्यापित्वे पूर्वे एव ग्राह्ये इति स्कान्देनोक्तम् । यत्र शुक्लायामुत्तरविद्धत्वप्राप्तस्यापवादो भवति । कृष्णायान्तु पूर्वविद्धत्वं प्राप्तमेव । तत्रापराह्णव्याप्युक्त्या सा मुख्या तदभावे सायाह्नव्यापिनी ग्राह्येति सिद्धम् । एवं सिद्धे रात्रिवाक्ये न तावदुभयं विधीयते । वाक्यभेदप्रसङ्गात् । तस्मादेकं विधेयम् । तत्रान्यासां शुक्लचतुर्दशीनां नियमेन पूर्वाह्णव्यापित्वाप्राप्तेरनुवादासंभवान्न रात्रिव्यापिनी ग्राह्येति विधिः । किन्तु परा पूर्वाह्णगामिनीति विधिः । सा रात्रिव्यापिनीत्यनुवादः । ननु द्वयोरात्रिव्यापित्वं क्व प्राप्तं यदनूद्यत इति चेच्छृणु—पूर्वाह्णगामि-

त्वविधौ पूर्वाह्णगामिन्येवेति न नियमः पूर्वत्र तिथ्यन्तरोपादानात् परैवेति नियमः। तथाच तयोस्तदभावः प्राप्तो लक्षणया रात्रिव्यापिनीत्यनेनानूद्यते। स च रात्रिव्यापित्वे न संभवति अपराह्णव्यापित्वेन सायाह्नव्यापित्वेनापि तत्र स्कान्दवाक्यप्राप्तमपराह्णव्यापित्वं तदभावे सायाह्नव्यापित्वं प्राप्तमनूद्यते। सायाह्नव्याप्तिस्तु माधवाचार्येण प्रतिपत्प्रकरणे पार्वणनिर्णये दर्शिता।

दिनान्ते पञ्चनाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः।
उदये च तथा पित्र्ये दैविके चैव कर्मणि॥

इति सङ्क्रान्तिप्रकरणे च—

दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः।
उदये च तथा पञ्च दैवे पित्र्ये च कर्मणि इति।

तथा चेयमपराह्णगा मुख्या तदभावे सायाह्नगा। तदभावे परा ग्राह्येति निष्कर्षः। नच तदभावे रात्रिगामिन्येवास्तु। क्वापि स्मृत्यन्तरे रात्रिव्यापित्वस्याविधानात्तद्विधौ फलान्तरकल्पनापत्तिः स्यादिति दिक्। विस्तरस्तु तत्रैव ज्ञेयः॥

इतिश्रीमन्मीमांसकभट्टवंशावतंसभट्टनीलकण्ठात्मज-
भानुभट्टकृते द्वैतनिर्णयसिद्धान्तसंग्रहे
मधुश्रावणशुक्लचतुर्दशी-
निर्णयः समाप्तः।



## अथ वैशाखशुक्लचतुर्दशी।

नृसिंहचतुर्दशी—

वैशाखशुक्लपक्षस्य चतुर्दश्यां विवस्वति।

अस्तंगामिनि सर्वेषां पुरस्तात् स्तम्भमध्यतः ॥
प्रबभूव महाविष्णुर्नरसिंहाकृतिर्नृप ।
तस्यां व्रतं नरैः कार्यं महाविष्णोरतिप्रियम् ॥
शनिवासरयोगे च स्वातियोगे च भूमिप ।
महाजयन्ती विख्याता दुर्लभा व्रतिनामिह ॥

इति नृसिंहपुराणात् । भविष्यत्पुराणे—ब्रह्मोवाच—

राधशुक्लचतुर्दश्यां शुद्धे वापि जयायुते ।
मन्दवारे नृसिंहोऽभूत्त्रेतायां चादिकल्पके ।
सायंकाले सदसतां रक्षादमनकारणात् ।
मध्याह्नेन तिथिः पुण्या किन्तु स्वात्यादिसंयुता ।
चतुर्णामपि वर्णानां व्रतेऽस्मिन्नधिकारिता ।

टोडरानन्दे—

वैशाखस्य चतुर्दश्यां सोमवारेऽनिलर्क्षके ।
अवतारो नृसिंहस्य प्रदोषसमये द्विज ! । इति ।

अत्र नृसिंहपुराणेऽस्तङ्गामिनि विवस्वतीतिसामान्यतस्तदुत्पत्तिकाल उक्तः । स्कान्दे प्रदोष उक्तः । तल्लक्षणं हेमाद्रौ–त्रिमुहूर्त्तं प्रदोषः स्याद्भानावस्तंगते सति इति । भविष्यत्पुराणे—सायंकाल उक्तः । तल्लक्षणञ्च 'नक्षत्रदर्शनात्संध्या सायं तत्परतः स्थितम्' । मार्कण्डेयः—'सायंसन्ध्या त्रिघटिका ह्यस्तादुपरि भास्वतः' इति मार्कण्डेयोक्तेर्नक्षत्रदर्शनेन त्रिघटिकात्मकः काल उच्यते । एवञ्च सायंसन्ध्योर्ध्वघटिकात्रयम् । प्रदोषसायंशब्दाभ्यां परस्परविशेष्यविशेषणभावेन लभ्यते जन्मकालत्वेनेति तत्कालव्यापिनी ग्राह्या

नृसिंहचतुर्दशी दिनद्वये तत्कालव्याप्तावव्याप्तावेकदेशसमव्याप्तौ वा शनिसोमस्वातीसिद्धयोगवणिजकरणन्यतमयोगप्राशस्त्यान्निर्णयः । एकदेशवैषम्यस्पर्शे आधिक्येनेति दिक्। इति नृसिंहजयन्ती ॥ तन्नवरात्रमपि कथ्यते—

षष्ठ्यामारम्भणं कार्यं चतुर्दश्यां समापनम्।
नवरात्रमितिप्रोक्तं नृसिंहपरमेशितुः ॥

इति नृसिंहाङ्घ्रिमहोदधौ नवरात्रशब्दो रूढ्यभिप्रायः।

इति श्रीमन्मीमांसकभट्टवंशावतंसश्रीमन्नीलकण्ठात्मजभट्टभानुकृते द्वैतसिद्धान्तसङ्ग्रहे नृसिंहचतुर्दशीनिर्णयः ॥

## अथ शिवरात्रिः।

तत्र हेमाद्रिः। यदा चतुर्दशी पूर्वदिने निशीथमात्रव्यापिनी परदिने प्रदोषमात्रव्यापिनी निशीथव्यापिन्यपि वा तदा।

अर्द्धरात्रात्पुरस्ताच्चेज्जयायोगो यदा भवेत्।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिः शिवप्रियैः।

इतिवचनात्पूर्वा। उक्तञ्च—

प्रदोषव्यापिनी ग्राह्या शिवरात्रिचतुर्दशी।
रात्रौ जागरणं यस्मात्तस्मात्तां समुपोषयेत्। इति

संदिह्याह-अर्द्धरात्रादिवाक्यं परदिने प्रदोषव्याप्त्यभावे सावकाशं प्रदोषवाक्यमर्द्धरात्रोत्तरजयायोगे सावकाशं तथापि प्रकृतोदाहरणे पूर्वैव चतुर्दशी ग्राह्याऽन्यथा पूर्वविद्धा शिवरात्रिविधायकबहुवचनसङ्कोचः स्यात्। किञ्च पूर्वाधिककर्मकालव्यापिनी नोत्तरा तथेति सैव ग्राह्या। तदिदमयुक्तम्। तत्राद्यदोषे विद्धपदमन्यतिथिव-

त्रिमुहूर्त्तपरमुतयोगमात्रपरम् । रात्रिवेधपरं निशीथवेधपरं वा । नाद्यः । परदिने एव प्रदोषव्यापिन्याः पूर्वदिने त्रिमुहूर्त्तविद्धाग्रहणवाक्यानामप्रवृत्तेः । न द्वितीयः । योगमात्रप्रतिपादकवाक्यानामुपसंहारन्यायेन त्रिमुहूर्त्तरूपसविशेषयोगपरत्वस्यौचित्यात् । तेन द्वितीयपक्षोपि न। नान्त्यौ। हेमाद्रिणा जन्माष्टम्यादाविव शिवरात्रिप्रकरणे वेधान्तरानिरूपणात्। यस्तु पूर्वाग्रहणे बहुकर्मकालव्यापित्वं हेतुरुक्तः सोप्ययुक्तः । तत्र कर्मशब्देन जागरणमुपवासो वा। नाद्यः। जागरणोपवासकालविरोधे उपवासकालबलीयस्त्वस्य पूर्वं स्वयमेवोक्तत्वात्। नोत्तरः। अहोरात्रयुक्ताया उपवासकालत्वेनोत्तराया एव बहुकर्मकालव्यापित्वात्। एवं हेमाद्युक्तयुक्तिद्वयनिरासेन प्रदोषव्यापिनीति वाक्येनोत्तरैव ग्राह्येति युक्तम्। अर्द्धरात्रादिति वाक्यन्तु परदिनेपि प्रदोषसम्बन्धाभावे ज्ञेयम् । न च प्रदोषग्रहणवाक्यमेव निशीथोत्तरजयायोगेऽस्त्विति वाच्यम् सामान्यविशेषसावकाशनिरवकाशन्याययोरप्रवृत्तावप्याकाङ्क्षितानाकाङ्क्षितन्यायेन तन्निराकरणात् । यदाऽन्यतरदिने प्रदोषव्याप्तिस्तदा तेनैव निर्णयः। यदा दिनद्वये प्रदोषे सत्वमसत्त्वं वा तदा पूर्वविद्धवाक्यानि आकाङ्क्षितविधानात्प्रवर्तन्ते।

त्रयोदशी यदा देवि दिनभुक्तिप्रमाणतः ।
जागरे शिवरात्रिः स्यान्निशि पूर्णा चतुर्दशी ॥

इति पद्मपुराणीयमाकाङ्क्षितविधानान् नियामकमुक्तं हेमाद्रिणा । एवं दिनद्वये प्रदोषव्याप्तियोगाभावे अर्धरात्रवाक्यं तेनैव न्यायेन नियामकमिति हेमाद्रिलिखितवाक्यमात्रालोचनेन

वक्तुं युक्तं तस्मात्तत्कृतः पूर्वोक्तो निर्णय उपेक्ष्य इतिदिक् । माधवेन तु निशीथव्याप्तचतुर्दशीग्रहणवाक्यान्यनेकानि लिखितानि तदनुरोधेन तत्कृतो निर्णयो युक्त एव तस्माद्धेमाद्रिकृतनिर्णयदूषण-पूर्वकं तत्तल्लिखितवाक्यमात्रालोचने योऽस्माभिर्निर्णयः कृतः स माधवसंवाद्येवेति न कोऽपि दोष इत्यलम् ।

इति शिवरात्रिसिद्धान्तनिर्णयः समाप्तः ।

## अथ सावित्रीव्रते पूर्णिमानिर्णयः ।

तत्राष्टादशनाडीचतुर्दशीवेधसत्त्वे परान्यथा पूर्वैवेत्याह—**माधवः** 'नाड्योऽष्टादशभूतस्य स्युश्चेत्तत्तु परेऽहनी'ति । 'पूर्वविद्धैव सावित्रीव्रते पञ्चदशी तिथि'रिति **हेमाद्रिस्तु** भूतोऽष्टादशनाडीवेध-सत्त्वेपि पूर्वैवेत्याह—सावित्रीव्रतमन्तरेण भवतोऽमापूर्णमास्यौ परे इति ।

अत्र माधवमतमयुक्तम्—'नागविद्धा न कर्त्तव्या षष्ठी चैव कदाचन । एकादशी न कर्त्तव्या दशमीसंयुता विभो' इतिस्कान्दाभ्यां 'भूतविद्धा न कर्त्तव्या दर्शः पूर्णा कदाचने'ति ब्रह्मवैवर्त्ते अमा-पूर्णिमयोर्भूतविद्धानिषेधे सति तदनुवादेन 'नागो द्वादशनाडीभिर्दिक् पञ्चदशभिस्तथा । भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिम् ॥' इत्यादिना त्रिमूहूर्त्तवेधापवादेन द्वादशादिघटिकापरिमाणमात्रं विधीयते लाघवात् । यन्नाग उत्तरां तिथिं दूषयति तद्दश-नाडीभिरित्यादि वाक्यार्थो भवति । माधवमते तु—भूतोऽष्टा-दशनाडीभिरित्यस्य सावित्रीव्रतेपि प्रवृत्त्यङ्गीकारे तत्र च—

पूर्वविद्धा न कर्त्तव्या दर्शः पूर्णा कदाचन ।
वर्जयित्वा मुनिश्रेष्ठ  सावित्रीव्रतमुत्तमम् ॥

इति पूर्वविद्धाविधेरेव सत्त्वाद्यद्भूत उत्तरां तिथिं दूषयति तदष्टादशनाडीभिरिति वचनव्यक्तियोगात् विशिष्टविधिरापद्येत 'भूतोऽष्टादशनाडीयुक्तोत्तरा तिथिः सावित्रीव्रते न ग्राह्येति' तथा सति गौरवं स्यादिति। पूर्वापरमाधवग्रन्थो विरुद्ध इत्यादिदूषणान्तरं तत्रैव ज्ञेयम्। अन्यान्यपि दूषणानि हेमाद्रियुक्त्यन्तरदूषणानि च तत्रैव ज्ञेयानि । तस्मादष्टादशनाडीयुक्ते अमापूर्णिमे न ग्राह्ये सावित्रीव्रते इति माधवाचार्यसिद्धान्तो न युक्तः। भूतोऽष्टादशनाडीयुक्ताप्युत्तरा तिथिः सावित्रीव्रते ग्राह्येत्येवयुक्तमत एव हेमाद्रिसिद्धान्ते तु संग्रहकालनिर्णयदीपिकायां सावित्रीव्रतमन्तरेण भवतोऽमापूर्णिमास्यौ परे इति साधारण्येनैवोक्तम्। न तु भूतोऽष्टादशनाडी युक्ता त्याज्येति दिक् ॥

इति श्रीमन्मीमांसकभट्टवंशावतंसभट्टनीलकण्ठात्मजभट्टभानुकृतद्वैतनिर्णयसिद्धान्तसंग्रहे सावित्रीव्रतनिर्णयः समाप्तः ।



## अथोपाकर्मद्वैतनिर्णयसिद्धान्तसंग्रहः ।

तत्र याज्ञवल्क्यः

अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य वा ॥

अधीयते इत्यध्याया इति योगरूढ्या वेदाः, तेषामुपकर्म—ग्रहणं श्रवणेन युक्तेऽह्नि हस्तेन युक्तायां पञ्चम्यां हस्तेन युक्तेऽहनि पञ्चम्यां वेति विकल्प इति केचित् । औषधिप्रादुर्भाव इति श्रावणस्येति च सर्वत्र सम्बद्ध्यते। आश्वलायनः—"अथातोध्यायोपाकरणमौषधीनां

प्रादुर्भावे श्रवणेन श्रावणस्य पञ्चम्यां हस्तेन वेति तद्वार्षिकमित्याचक्षत" इति । वार्षिकः कालः श्रावणभाद्रपदौ । तत्र वर्षाकाले भवं वार्षिकमिति समाख्यया भाद्रपदो विधीयते । श्रावणस्य साक्षाद्विधानान्मासविधिश्च मासान्तरमेव बाधते न श्रावणपञ्चमीहस्तान्प्रत्युत भाद्रपदे कदा कार्यमित्यपेक्षत एव तेन भाद्रगतश्रवणपञ्चमी हस्तानामपि सिद्धमुपाकर्मकालत्वम् । अत्र वृत्तिकारस्तु श्रावणगतश्रवणे हस्तयुक्तपञ्चम्यां वेति पूर्वसूत्रं व्याख्याय तद्वार्षिकमित्याचक्षते—इत्येवं भाद्रपदं विधाय एवं च कालत्रयमुक्तं भवतीति व्याख्यातवान् । तत्पूर्वोक्तव्याख्यानेन चिन्त्यम् । बौधायनः—'श्रावण्यामाषाढ्यां वोपाकृत्य तैष्यां माघ्यां चोत्सृजेदिति' । गोभिलः—प्रोष्ठपदीहस्तेनोपाकरणं प्रोष्ठपदीं प्राप्येत्यध्याहारः । तेन भाद्रशुक्लहस्ते सामगानामुपाकरणमित्यर्थः ।

श्रावष्ठ्यां प्रोष्ठपद्यां वाप्युपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान्विप्रोऽर्धपञ्चमान् ॥

अत्रापिशब्देन श्रावणभाद्रपदगतश्रवणपञ्चमीहस्तानामुपादानं पूर्वोक्ताश्वलायनसूत्रात् ।

कात्यायनः—

उपाकृत्योदगयने ततोऽधीयीत धर्मवित् ।
उत्सर्गश्च तथा तैष्यां माघ्यां प्रोष्ठपदेपि वा ॥

एतेषां च कालानां स्वस्वगृह्यानुसारेण व्यवस्था । तत्राप्यनन्विततया क्रमोप्याकाङ्क्षावशेन विवक्षितस्तेनाश्वलायनाः स्वसूत्रात् प्रथमं श्रवण उपाकर्म । तत्र ग्रहसंक्रान्त्यादिदोषे हस्तयुक्तपञ्चम्यां

हस्तयुक्तदिने वेति । एवं याजुषाणां पौर्णमास्यादि, सामगानां हस्तादिक्रमः। अत एव स्मृतिः—

उपाकर्म प्रकुर्वन्ति क्रमात्सामर्ग्यजुर्विदः।
ग्रहसंक्रान्त्ययुक्तेषु हस्तश्रवणपर्वसु ॥

इति याजुषेषु वाजसनेयिभिः पौर्णमास्यां ग्रहणादिदोषे श्रावणगतपञ्चम्याद्युपादेयम्—

संक्रान्तिर्ग्रहणं वापि यदि पर्वणि जायते।
तन्मासे हस्तयुक्तायां पञ्चम्यां वा तदिष्यते।

इति स्मृतिमहार्णववचनात् । अत्र हस्तयुक्तायामित्यत्र विशेष्याकङ्क्षायामुपस्थितपञ्चम्या एवानुषङ्गेनान्वयः नानुपात्तस्य तिथ्यन्तरस्य अध्याहारप्रसङ्गात्। तेन हस्तयुक्तपञ्चम्यां केवलायां वा तस्यामिति विकल्पः न तु हस्तयुक्तान्यतिथौ तद्युक्तपञ्चम्यां वेति । 'यदि स्याच्छ्रावणं पर्वग्रहसंक्रान्तिदूषितम् । स्यादुपाकरणं शुक्लपञ्चम्यां श्रावणस्य तु'इति वाक्ये केवलशुक्लपञ्चम्युपादानं संगच्छते अन्यथा तस्य संकोचादिति केचित् ।अन्ये तु पञ्चम्यां वेति तिथ्यन्तरेणैव विकल्पप्रतीतेस्तद्विशेषापेक्षायां हस्तयुक्तायामित्यस्य विशेषसमर्पकत्वं भवति। एवञ्च—पक्षद्वयेपि बुद्धिस्थस्यैवाध्याहारेणान्वयः। पदोपस्थितस्यैवाध्याहार इत्यत्र तु न किञ्चिन्मूलम्। अस्मिन्पक्षे पञ्चमीपदं यथाश्रुतं भवति। भवत्पक्षे हस्तयुक्तत्वाभावविशिष्टपञ्चमीपरमिति विशेषः । एवञ्च—विकल्पे स्थिते संकोचोपि बलादापतितः स्वीक्रियते। तस्मात्पञ्चम्या हस्तयुक्ततिथ्यन्तरेण विकल्पः। तत्रापि हस्तयुक्ताया असंभवे केवलेति ।

अयं सर्वग्रन्थः पुस्तकान्तरेण दृष्ट्वा निर्णेय इति । इदञ्च वाजसनेयिविषयम्—

संक्रान्तिर्ग्रहणं वापि पौर्णमास्यां यदा भवेत् ।
उपाकृतिस्तु पञ्चम्यां कार्या वाजसनेयिभिः ॥

इतिस्मृतिमहार्णवे वचनान्तरादिति हेमाद्रिः । अत्र वाजसनेयिपदं तैत्तिरीयाणामुपलक्षकमिति केचित् । लक्षणायां मानाभावादिति । येषां च बह्वृचानां सूत्रे पञ्चम्युपात्ता तेषां तु भवत्युपलक्षणम् । सूत्रस्यैव प्रमाणत्वात् । एवं पौर्णमासीग्रहणं श्रवणहस्ताद्युपलक्षकम् । तत्सिद्धं श्रावणीश्रवणयोर्ग्रहणसंक्रान्तिदुष्टयोर्बह्वृचवाजसनेयिनोः श्रावणशुक्लपञ्चम्यां हस्तयुक्तायां तदसंभवे केवलायां तस्यां हस्तयुक्तान्यतिथौ वोपाकर्मेति । हिरण्यकेशिनां तु हस्तयुक्तायां यस्यां कस्यां चित्तिथौ तत्सूत्रे हस्तमात्रग्रहणात् तदभावे प्रौष्ठपद्यां, तद्भिन्नतैत्तरीयाणान्तु प्रौष्ठपद्यामेव । बौधायनानां तु आषाढ्यां 'श्रावण्यामाषाढ्यां वोपाकृत्य छन्दांस्यधीयीतेति बौधायनवचनात् । श्रावणे वौषधिप्रादुर्भावाभावे भाद्रपदगतश्रवणादिषु पूर्वोक्तव्यवस्थयोपाकर्म कार्यम् । तथा च–बह्वृचगृह्यपरिशिष्टकारिका—

अवृष्ट्यौषधयस्तस्मिन्मासे तु न भवन्ति चेत् ।
तदा भाद्रपदे मासि श्रवणेन तदिष्यत ॥ इति ।

अत्र श्रवणग्रहणं पर्वहस्तपञ्चमीनामुपलक्षणम् । पूर्वे तद्वार्षिकमित्याचक्षत इति सूत्रव्याख्यानमेषामपेक्षितत्वेन ग्रहणस्य साधितत्वात् । अपेक्षविधित्वादेव च औषधिप्रादुर्भावाभाव इवाशौचेन

ग्रहसंक्रान्तिनिमित्तेन शुक्रास्तादौ प्रथमोपाकर्मनिषेधेन श्रावणातिक्रमेऽपेक्षितविधित्वादेव भाद्रपदगतश्रवणपर्वहस्तादिषूपाकर्म कार्यम् । इदश्चावृष्ट्यौषधय इति प्रतिबन्धकनिमित्तान्तरोपलक्षणम् । ननु प्रथमोपाकृतेः मुख्यकालातिक्रमे कथं गौणकाले प्रारम्भ इति चेत्सत्यम्—यथा 'दिवोदितानि कर्माणि प्रमादान्न कृतानि चेत् । शर्वर्याः प्रथमे यामे तानि कुर्याद्यथाक्रमम् ॥ इत्यत्र गौणकालत्वं तथा नात्र गौणत्वं किन्तु नानास्मृतिष्वनेककाला विहितास्तत्र व्यवस्थापेक्षायां श्रावणगतश्रवणादीनां ग्रहणसंक्रान्त्यादिदोषे तद्वतपञ्चम्यादि नियम्यते । तत्रापि दोषेण श्रावणातिक्रमे भाद्रपदगतश्रवणादयो व्यवस्थास्यन्ते । तस्मात्प्रथमोपाकर्मकार्यमेव । पञ्चम्यादिषु प्रथमोपाकर्मनिषेधश्च संग्रहे—

गुरुभार्गवयोर्मौढ्ये बाल्ये वा वार्द्धकेऽपि वा ।
तथाधिमाससंसर्पमलमासादिषु द्विजाः ।
प्रथमोपाकृतिर्न स्यात् कृतं कर्म विनाशकृदिति ।

कात्यायनोऽपि

उत्कर्षः कालवृद्धौ स्यादुपाकर्मादि कर्मणीति । यत्तु ऋष्यशृङ्गे—

दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।
उपाकर्ममहाषष्ठी ह्येतदुक्तं वृषादितः ॥

इति तच्छन्दोगविषयम् । तेषां हि सौरमानेन सिंहार्के उपाकर्मविधा । तथा च सौरमानेनाह गार्ग्यः—

सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः ।
छन्दोगाः मिलिताः कुर्युरुत्सर्गं स्वस्वछन्दसाम् ॥

शुक्लपक्षे तु हस्तेन उपाकर्म पराह्णिकमिति ।

सौरमानेन यदुक्तं तत्र नोत्कर्षोऽधिमासादिषु तत्र युगादयो न क्वापि सौरमानेनोक्ताः प्रत्युत चान्द्रमासवचनवैशाखादिपुरस्कारेण । तथा च ब्रह्मपुराणे—

वैशाखशुक्लपक्षस्य तृतीयायां कृतं युगम् ।
कार्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि ॥
अथ भाद्रपदे कृष्णत्रयोदश्यां च द्वापरम् ।
माघे तु पौर्णमास्यां तु घोरं कलियुगं तथा ॥

स्कान्दभविष्यत्पुराणयोस्तु कार्तिकशुक्लनवम्यां कृतं, चैत्रासिततृतीयायां त्रेता, माघदर्शे द्वापरं, भाद्रकृष्णत्रयोदश्यां कलिरिति । अत्र कल्पभेदेन विरोधपरिहारो ज्ञेयः । अत्र कथं युगाद्यनुत्कर्षः । अत्र हेमाद्रिः । यद्यपि वैशाखादिशब्दाश्चान्द्रवचना एव तथापि युगाद्युत्कर्षनिषेधपर्यालोचनया सकलजनप्रसिद्ध्यानुगुण्यादनुष्ठानादराच्च सौरमानेनैव युगादयो ग्राह्या इति तेन मेषार्के वैशाखसिततृतीयोच्यते । तुलार्के कार्तिकासितनवमीत्युच्यते । सिंहार्के कृष्णत्रयोदशी भाद्रपदकृष्णत्रयोदशीत्युच्यते । मकरार्के माघाम उच्यते । एताश्चतस्रो युगादयः इत्यर्थः । अतो मेषादिष्वधिमासे आसां नोत्कर्षः । दशहरादिषु तु स्पष्टमेव वृषादित इत्यादि सौरमानमनुत्कर्षे हेतुत्वेनोक्तम् । तस्मादनुत्कर्षश्छन्दोगविषयः । तेषां सिंहार्के उपाकर्मविधानात् । अन्येषां तु उत्कर्षः कालवृद्धौ स्यादुपाकर्मादिकर्मणी'ति कात्यायनवाक्यात् । यत्तु—

वेदोपाकरणे प्राप्ते कुलीरे संस्थिते रवौ ।
उपाकर्म न कर्त्तव्यं कर्तव्यं सिंहयुक्तके ॥

इति प्रयोगपारिजातवचनम्,

उपाकर्म तु कर्तव्यं कर्कटस्थे दिवाकरे ।
हस्ते च शुक्लपञ्चम्यां श्रावण्यां श्रवणेन वेति ।

तदुभयं छन्दोगविषयमेव ।

नर्मदोत्तरभागे तु कर्त्तव्यं सिंहयुक्तके ।
कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे ॥

इति बृहस्पतिवचनेनानयोरुपसंहारात् । अत्र हि यत्सिंहे कर्त्तव्यं तन्नर्मदोत्तरभागे इति सिंहोद्देशेन देशविशेषो विधीयते । स च सिंहार्कः पूर्वोक्तगार्ग्यवचनेन छन्दोगानामेव प्राप्तोऽतो नर्मदोत्तर-देशस्तान्प्रत्येव नियम्यते । तथा च तेषामेव नर्मदादक्षिणभागे कदा कार्यमित्याकाङ्क्षायां कर्कटे इति विधीयते । एवञ्चाकाङ्क्षाविधित्वाल्लाघवं सर्वान्प्रति देशविधावपूर्वविधिरनाकाङ्क्षितविधिश्चेति गौरवं स्यात् । तस्माच्छन्दोगानामेवानुत्कर्षः । अन्येषां तु उत्कर्षः । अन्यथा उत्कर्षः कालवृद्धौ स्यादिति पूर्वोक्तवचनं निर्विषयं स्यात् । अत्र विशिष्टोद्देश-स्वीकारोपपत्तिस्तु द्वैतनिर्णय एव बोध्या विस्तरभयान्नोक्तेति । यत्तु—कालादर्शे देशभेदेन सिंहकर्कटयोर्व्यवस्था नोक्ता किन्तु सर्वेषामेव बह्वृचादीनां श्रावणे सिंहार्कश्रवणादिषूपाकर्म तत्र तदभावे श्रवणादिषु । तथा च स्वकारिका—

अध्यायानामुपाकर्म श्रावण्यां तैत्तिरीयकाः ।
बह्वृचाः श्रावणे कुर्युः सिंहस्थार्को भवेद्यदि ॥

अत्र सिंहार्कप्रौष्ठपद्यां श्रवणेन व्यवस्थयेति । तत्स्वयमेव व्याख्याने मूलानुपन्यासान्निष्प्रमाणकमिति । पर्वणि ग्रहणे चतुर्दश्यामपि श्रवणे उपाकर्म न कार्यम् ।

त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम् ।
माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्ययोः ॥

इति वचनात् । तन्न—

नित्यनैमित्तिके जप्ये होमयज्ञक्रियासु च ।
उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते ॥

इतिप्रतिप्रसववचनादिति । अत्र श्रवणाद्यौदयिकं ग्राह्यम् । तथा च **परिशिष्टकारिका**—

पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः ।
वह्वृचाः श्रवणे कुर्युर्ग्रहसंक्रान्तिवर्जिते ॥

श्रवणे इत्यत्राप्यौदयिके इत्यनुषज्यते ।

औदयिकं पर्वविशिनष्टि गोभिलः । तथा च श्रावणी पौर्णमासी तु संगवात्परतो यदि । तदाप्यौदयिकी ग्राह्या नान्या प्यौदयिकी मतेति । **परिशिष्टान्तरे**—

धनिष्ठाप्रतिपद्युक्तं त्वाष्ट्रऋक्षसमन्वितं ।
श्रावणं कर्म कुर्वीरन् ऋग्यजुः सामपाठकाः

धनिष्ठायुक्तं श्रवणर्क्षं प्रतिपद्युक्तं पर्व चित्रायुक्तं हस्तर्क्षम् । अत्र तैत्तिरीयग्रहणात्त एवौदयिके पर्वणि कुर्युरन्ये तु याजुषाः पूर्वविद्धे एव 'श्रावणी दुर्गा नवमीत्यादि' वचनादिति केचित् । तन्न—

चतुर्दश्यां समुत्पन्नावसुरौ मधुकैटभौ ।
वेदान्स्वीकुर्वतः पद्मयोनेस्तौ जहतुः श्रुतीः ।
हत्वा तावसुरौ देवाः पातालतलवासिनौ ।
आहृत्य ताः श्रुतीस्तस्मै ददौ लोकगुरुः स्वयम् ॥
अभूल्लब्धश्रुतिर्ब्रह्मा पर्वण्यौदयिके पुरा ।
अतो भूतयुते तस्मिन्नोपाकरणमिष्यते ॥

इति कालिकापुराणे सर्वसाधारण्येन पुनः कारणविधानाद्भूतयुते पर्वणि निषेधाच्च। अतः सर्वेपि याजुषाः औदयिके कुर्युरित्यन्ये । पितामहचरणैस्तु यदैकस्मिन्दिने पर्वादि कर्मकालव्यापि तदा सर्वैस्तत्रैवोपाकर्म कार्यं यदा तु दिनद्वये कर्मकालव्याप्तिस्तदव्याप्तिर्वा तदा तैत्तिरीयैरौदयिके कार्यम् । अन्यैरन्यत्रेति व्यवस्थोक्ता । तदुपपादनं च द्वैतनिर्णय एव ज्ञेयम् । कर्मकालस्तु—छन्दोगभिन्नानां पूर्वाह्ण एव । 'भवेदुपाकृतिः पौर्णमास्यां पूर्वाह्ण एव त्वि'ति प्रचेतोवाक्यात्पूर्वाह्णे दैविकं कर्मेति सामान्यवचनाच्च। पौर्णमासीपदमुपलक्षणं श्रवणस्य । छन्दोगानां तु पूर्वोक्तगार्ग्यवाक्यादपराह्णः । यत्तु—गोभिलवाक्यम्—

अध्यायानामुपाकर्म कुर्यात्कालेऽपराह्णके ।
पूर्वाह्णे तु विसर्गः स्यादिति वेदविदो विदुः ॥

इति तद्गार्ग्यवचनोपसंहाराच्छन्दोगविषयमेव । उपाकर्म पराह्णे स्यादिति कालादर्शकारिकापि छन्दोगविषयैव व्याख्येयेति । पूर्वोक्तग्रहसंक्रान्तिनिषेधे विशेषः । प्रयोगपारिजाते वृद्धमनुः—

अत्रार्द्धरात्रादर्वाक्चेद्ग्रहः संक्रम एव वा ।
नोपाकर्म तदा कुर्यात् श्रावण्यां श्रवणे न तु ॥ इति

कात्यायनोपि–

अर्द्धरात्रादधस्ताच्चेत् संक्रान्तिर्ग्रहणं तदा ।
उपाकर्म न कुर्वीत परतश्चेन्न दोषकृदिति ॥

बह्वृचां श्रवणे विशेषः । स्मृत्यर्थसारे–श्रवणे आदौ घटिका चतुष्टयाभिजिन्नक्षत्रांशवर्जमिति ।

इति श्रीमन्मीमांसकभट्टनीलकण्ठात्मजभट्टभानुकृते द्वैतनिर्णय-सिद्धान्तसंग्रहे उपाकर्मसिद्धान्तनिर्णयः समाप्तः ॥

## ॥ अथहोलिकानिर्णयः ॥

फाल्गुनपूर्णिमा होलिकादीपनपूजनादौ पूर्वविद्धा ग्राह्या ।

श्रावणी दुर्गानवमी दूर्वा चैव हुताशनी ।
पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम् ॥

इतिबृहद्यमवचनात् चतुर्दश्यां च पूर्णिमेति युग्मवाक्याच्च । प्रदोषोऽस्य कर्मकालः । 'निशामुखे तु पूज्येत होलिका सर्वतोमुखै-रि'ति पृथ्वीचन्द्रोदये दुर्वासोवाक्यात् ।

भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा ।
श्रावणी तु नृपं हन्ति ग्रामं दहति फाल्गुनी ।

इति स्मृत्या निषेधात्प्रदोषे भद्रासत्त्वे तदवसानेऽर्द्धरात्रोत्तरमपि होलिकादीपनं कार्यम् । तथा च भविष्योत्तरे—

राकायामद्व्यादूर्ध्वं चतुर्दश्यां यदा भवेत् ।
होलीं भद्रावसाने तु निशीथान्तेपि दीपयेदिति ।

एवञ्च यानि—

भद्रायां विहितं कार्यं होलिकायाः प्रपूजनम् ।
मध्यरात्रमतिक्रम्य विष्टिपुच्छं यदा भवेत् ।
प्रदोषे ज्वालयेद्वह्निं सुखसौभाग्यदायकम् ॥

इत्यादीनि तानि निर्मूलानि । महानिबन्धेष्वदर्शनात् । यदा पूर्वरात्रौ भद्रारहितः कालो न लभ्यते उत्तरदिने चास्तमनात्पूर्वमेव पूर्णिमा समाप्ता तदा रात्रौ भद्रापुच्छे कार्यम् । तथा च लल्लः—

पृथिव्यां यानि कार्याणि शुभानि त्वशुभानि च ।
तानि सर्वाणि सिध्यन्ति विष्टिपुच्छे न संशयः ॥

इति यदा चास्मिन्नेव विषये उत्तरदिने पौर्णमासीयामत्रयमिता ततोऽधिका वा प्रतिपदश्चोत्तरदिने वृद्धिस्तदोत्तरदिने प्रदोषे प्रतिपन्मध्येपि होलीपूजनं कार्यं न पूर्वरात्रौ विष्टिपुच्छे ।

सार्द्धयामत्रयं पूर्णा द्वितीये दिवसे यदा ।
प्रतिपद्वर्द्धमाना तु तदा सा होलिका स्मृता ॥

इतिभविष्योत्तरात् । या तु दिनद्वये प्रदोषव्याप्ता एकदेशव्याप्ता वा सोत्तरैव ग्राह्या । पूर्वरात्रे भद्राव्याप्तत्वात् । पूर्वोक्तश्रावणी दुर्गानवमीति पूर्वविद्धाग्राह्यत्ववचस्तु उत्तरदिने प्रदोषस्पर्शे ज्ञेयम् । न च कर्मकालशास्त्रादेव तद्वाक्यं व्यर्थं फलविशेषार्थत्वात् । वस्तुतस्तु दिनद्वयेपि प्रदोषव्याप्तावेव यदा पूर्वरात्रौ भद्रारहितः कालो लभ्यते तदा तत्सावकाशम् । यत्तु कश्चित् । दिनद्वयेपि

प्रदोषस्पर्शे पूर्वरात्रेर्भद्रारहितकालालाभेनोत्तरदिने प्रतिपत्त्रयेपि उत्तरत्रानुष्ठानशङ्कायां पूर्वविद्धवाक्यमेवमादिविषयं । एवं च—

दिवाभद्रा यदा रात्रौ रात्रिभद्रा यदा दिवा ।
सा भद्रा भद्रदा यस्माद्भद्रा कल्याणदायिनी ।

इतिज्योतिषिकवचनमिति । तन्मन्दम् । एतदुदाहरणे त्रिमुहूर्त्तसायाह्नव्यापित्वाभावे श्रावणीति वचनाप्रवृत्तेः । विद्धापदस्य-योगपरत्वे लक्षणायां सकलग्रन्थविरोधाच्चेति । किञ्च ज्यौतिषिकवचनेनैव भद्रायां तत्पुच्छे वानुष्ठानसिद्धे श्रावणीतिवाक्यवैयर्थ्यं स्यादिति दिक् । यदा पूर्वरात्रौ भद्रारहितकालो न लभ्यते उत्तरप्रदोषे विद्यमानापि पौर्णिमाग्रहणरहिता न लभ्यते तदा ग्रहणस्नानोत्तरं होलीपूजनादि कार्यम् ।

सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।
स्नात्वा कर्माणि कुर्वीत श्रुतिमन्त्रं विवर्जयेत् ॥

इतिस्मृतेः । 'स्मार्त्तकर्मपरित्यागो राहोरन्यत्र सूतके' इति स्मार्तसर्वकर्मणां प्रतिप्रसवाच्चेति । अत्र सगतिकानि काम्यानि महा-वेधप्रवृत्त्यै न भवन्तीति दिक् ॥

इति श्रीमन्नीलकण्ठभट्टात्मजभट्टभानुकृते द्वैतनिर्णय-
सिद्धान्तसंग्रहे होलिकानिर्णयः ॥



## ॥ अथ संक्रान्तिनिर्णयः ॥

**माधवीये वसिष्ठः—**

रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः ।
अर्द्धरात्रादधस्तस्मिन्मध्याह्नस्योपरि क्रिया ।

उदूर्ध्वं संक्रमणे चोदूर्ध्वमुदयात्प्रहरद्वयम् ।
पूर्णे चेदर्धरात्रे तु यदा संक्रमते रविः ।
प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ ।

अनेन सामान्यवचनेन मकरकर्कटभिन्नसंक्रान्तिदशकं पुण्यकालमुक्त्वाऽयनद्वये पुण्यकालविशेष उक्तः । तथा च भविष्योत्तरे—

मिथुनात्कर्कसंक्रान्तिर्यदि स्यादंशुमालिनः ।
प्रभाते वा निशीथे वा कुर्यादहनि पूर्वतः ॥
कार्मुकं तु परित्यज्य झषं संक्रमते रविः ।
प्रदोषे वा निशीथे वा स्नानं दानं परेऽहनि ।

यत्तु देवलवाक्यम्—

आसन्नसंक्रमं पुण्यं दिनार्द्धं स्नानदानयोः ।
रात्रौ संक्रमणे भानोर्विषुवत्ययने दिवेति ।

अत्र विषुवतीत्यन्तं यथाश्रुतं व्याख्याय दिवेत्यस्यैवं व्याख्या कृता । अयने दिवाजाते सति दिनार्द्धं पुण्यं कर्कटे पूर्वं मकरे तूत्तरमिति । इदञ्च मध्यंदिनविषयम् । उदयास्तमयप्रत्यासन्नेत्वयं पूर्वोक्तभविष्योत्तरवचनाभ्यामेव निर्णय इति । कालादर्शेऽप्येवम्—हेमाद्रौ देवलवाक्यमेव यज्ञपार्श्ववाक्यत्वेनोक्तम् । विषुवति रात्रौ जाते आसन्नसंक्रमदिनार्द्धं पुण्यम् । अयने तु आसन्नसंक्रमे दिवा पुण्यं दिनमित्यर्थः । दिनेति पाठान्तरे तु रात्रौ दिवा वा विषुवत्यनयोर्द्वयोरपि—आसन्नसंक्रमं दिनार्द्धमेव पुण्यमिति व्याख्यातमयनविषयेऽर्थद्वयमिदं कालनिर्णयदीपिकायामुक्तम् ।

अथायनमधः पश्चान्निशार्द्धादेव यद्भवेत् ।
यदासन्नमहस्तदर्द्धमथवा पुण्यमिति ॥

यत्तु—कार्मुकं तु परित्यज्येतदर्थकम्—

अस्तं गते यदा सूर्ये झषं याति दिवाकरः ।
प्रदोषे वार्द्धरात्रे वा तदा पुण्यं दिनान्तरम् ।

इति बौद्धायनवाक्यं तदेवं व्याख्येयम् । तथा हि—अत्र च प्रदोषे मकरसंक्रान्तौ परदिने भोग इति नार्थः । किन्त्वत्र प्रदोषे वेत्ययं वा शब्दः यथा शब्दस्यार्थे द्वितीयो वाशब्दस्तथाशब्दार्थे वोपमानविकल्पयोरिति नित्यं स्मरणात् । अव्ययानामनेकार्थत्वाच्च । एवञ्चायमर्थः संपन्नः । यथा प्रदोषे मकरसंक्रान्तौ पूर्वदिनार्द्धं पुण्यं तथाऽर्द्धरात्रसंक्रान्तौ परदिनं पुण्यमिति । अनेनैव कार्मुकं परित्यज्यैतदपि व्याख्यातम् । एवञ्च—यज्ञपार्श्ववचनेन—

धनुर्मीनावतिक्रम्य कन्यां च मिथुनं यदा ।
पूर्वापरविभागेन यदा संक्रमते रविः ॥
दिनान्ते पञ्चनाड्यस्तु तदा पुण्यतमाः स्मृताः ।
उदये च तथा पञ्च दैवे पित्र्ये च कर्मणि ॥

इतिस्कान्दवचनविरोध इति हेमाद्रिमतम् ॥

अत्र चैवं हेमाद्रिमतनिष्कर्षः—अयनभिन्नदर्शसंक्रान्तिषु रात्रौ जातास्वर्द्धरात्रात्पूर्वं पूर्वदिनोत्तरार्द्धमर्द्धरात्रोत्तरमुत्तरदिनपूर्वार्द्धं पूर्वार्द्धरात्रे तु अयनभिन्नसंक्रान्तिषु पूर्वदिनोत्तरार्द्धमुत्तरदिनपूर्वार्द्धञ्चेति दिनद्वयं पुण्यम् । अयने तु पूर्वविषये सम्पूर्णं पूर्वदिनं पुण्यमुत्तरदिनं चेत्ययं विशेषः । अयञ्च—यज्ञपार्श्ववचने दिवेति

पाठे, दिने इति पाठे तु आसन्नसंक्रमं दिनार्द्धमेव पुण्यम् । अयनद्वये त्वर्द्धरात्रौ जाते दिनद्वयं न पुण्यं किन्तु मकरे सम्पूर्णं परदिनं पुण्यम् । कर्कटे पूर्वदिनं पुण्यं कार्मुकं तु परित्यज्येति वाक्यात् मिथुनात्कर्केत्यादिवाक्याच्चेति ।

माधवमतनिष्कर्षस्तु—अयनभिन्नदर्शसंक्रान्तिष्वर्द्धरात्रात्पूर्वं जातासु पर्वदिनोत्तरार्द्धमर्द्धरात्रोत्तरत्तूत्तरदिनपूर्वार्द्धं पुण्यं संपूर्णार्द्धं रात्रौ तु पूर्वदिनोत्तरार्द्धमुत्तरदिनपूर्वार्द्धं चेति दिनद्वयं पुण्यम् । अयने तु मकरे सूर्यास्तोत्तरं यदा कदाचिज्जाते उत्तरदिनं सर्वं पुण्यमुदये पञ्च घटिकाः पुण्यतमाः । कर्के तु द्वितीयदिनसूर्योदयात्पूर्वं यदा कदाचिज्जाते पूर्वार्द्धं च सर्वं पुण्यं पञ्च घटिकाः पुण्यतमा इति ।

अत्र हेमाद्रिमतदूषणपूर्वकं माधवमतमेव स्थापितं द्वैतनिर्णये विस्तरभयान्न लिखितमिति दिक् ॥

इति श्रीमीमांसकभट्टनीलकण्ठात्मजभट्टभानुकृते द्वैतनिर्णयसिद्धान्तसंग्रहे संक्रान्तिनिर्णयः ॥



## अथ ग्रहणे उपवासनिर्णयः ।

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यते ॥

इति दक्षेण पापक्षयार्थमुपवास उक्तः । स च पुत्रवता न कार्यः ।

संक्रान्त्यामुपवासं च कृष्णैकादशिवासरे ।
चन्द्रसूर्यग्रहे चैव न कुर्यात्पुत्रवान्गृही ॥

इति नारदेन निषेधात् । ग्रस्तास्तनिमित्तेऽहोरात्रं न भोक्तव्यमिति भोजनप्रतिषेधादर्थादुपवासः प्राप्तः स तु पुत्रवतापि कार्य इति माधवः । कालादर्शेप्येवम् । हेमाद्रौ तु ग्रस्तास्तेऽहोरात्रभोजननिषेधादुपवासः प्राप्तः । पुत्रवतस्तु—

आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।
उपवासो न कर्तव्यो गृहिणा पुत्रिणा तथा ॥

इति उपवासनिषेधस्यापि प्राप्तौ किं कार्यमिति संशये पञ्चधाभक्तदिनान्त्यभागद्वयं त्यक्त्वा भागत्रये भोक्तव्यम् । तथा च मार्कण्डेयः—

सायाह्ने ग्रहणं चेत्स्यादपराह्णे न भोजनम् ।
अपराह्णे न मध्याह्ने मध्याह्ने न तु संगवे ।

इति सिद्धान्त उक्तः । अत्र तत्प्रयुक्तोपवासस्यैव निषेधो युक्तो नानुषङ्गप्राप्तस्य । ग्रस्तास्ते तु भोजननिषेधोऽर्थात्प्राप्तो न विधितः । तथा च जैमिनिः—

आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्ययोः ।
पारणं चोपवासं च न कुर्यात्पुत्रवान् गृही ॥
तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः ।
नानुषङ्गकृतो ग्राह्यो यतो नित्यमुपोषणमिति ॥

अन्यथा ज्वरादिप्रयुक्तोपवासस्यापि ग्रहणादिदिने निषेधः स्यात्, स्याच्च संक्रान्त्यादिदिने शिवरात्र्यादिप्रयुक्तोपवसस्यापि । न

चैतदिष्टं तस्माद्धेमाद्रिमतमयुक्तमेव। न च तन्निमित्तत्वं तद्धेतु-कत्वमात्रं न ग्रहणादिषु विहितत्वं तच्च भोजनद्वयनिवृत्तावप्यस्तीति तन्निषेधो युक्त एव। उपवासव्रतं चरेदित्यादिव्रतशब्दसामानाधिकरण्याद् व्रत उपवासशब्दो रूढः भोजनद्वयनिवृत्तौ तु लाक्षणिकः मुख्य-लाक्षणिकयोर्मुख्यस्यैव निषेधवाक्ये ग्रहणं युक्तम्। एवञ्चैकादशी-प्रकरणे हेमाद्रिणा व्रतरूपोपवास एव पुत्रवता न कार्यो भोजनद्वय-निवृत्तिस्तु कार्यैवेत्युक्तं संगच्छतेऽन्यथा तद्ग्रन्थविरोधः स्यादिति तस्मान्माधवमतमेव सम्यगिति दिक्।

इति श्रीमन्मीमांसकभट्टनीलकण्ठात्मजभट्टभानुकृते द्वैत-निर्णयसिद्धान्तसंग्रहे ग्रहणोपवासनिर्णयः।



## अथानूढकन्यामृतावाशौचनिर्णयः।

अथ ग्रहणनिर्णयेन तदाशौचोपस्थित्याशौचान्तरस्याप्युपस्थितौ तन्निर्णीयते। तत्र कन्यामृतौ शुद्धिविवेके—

आजन्मनस्तु चूडान्तं यत्र कन्या विपद्यते।
सद्यः शौचं भवेत्तत्र सर्ववर्णेषु नित्यशः।

ततो 'वाग्दानपर्यन्तं यावदेकाहमेव ही'ति ब्रह्मपुराणवाक्य-मुक्त्वोक्तमिदमत्र तात्पर्यम्—अत्र चूडान्तमित्यत्र चूडापदेन तृतीय-वर्षरूपः कालो लक्ष्यते स अन्ते यस्येति चूडान्तं द्वितीयवर्षसमाप्ति-पर्यन्तमिति यावत्तत्र सद्यः, ततो वाग्दानपर्यन्तमेकाहमेव इति। मेधातिथिरपि स्त्रीणामसंस्कृतानामहरित्यत्र 'अहस्त्वदत्तकन्यासु

वालेषु च विशोधनमि'त्यत्र च चूडाकरणकालः पूर्वावधित्वे-नावतिष्ठत इत्याह—स चैह प्रविष्टे तृतीये वर्ष इत्येषः। विज्ञाने-श्वरस्तु—तृतीयवर्षसमाप्तिपर्यन्तं कन्यामृतौ सद्यः शौचमित्याह। तस्यायमाशयः—अत्र प्रकरणे त्रीण्यङ्गिरोवाक्यानि श्रूयन्ते–

विप्रे न्यूनत्रिवर्षे तु मृते शुद्धिस्तु नैशिकीत्येकम्।
यद्यप्यकृतचूडो वै जातदन्तस्तु संस्थितः।
दाहं कृत्वा तथाप्येनमाशौचं त्र्यहमाचरेदिति द्वितीयम्।
अविशेषेण वर्णानामर्वाक् संस्कारकर्मणः।
त्रिरात्रात्तु भवेच्छुद्धिः कन्यास्वह्ना विधीयत इति तृतीयम्।

अत्राद्यवाक्येन समाप्ततृतीयवर्षे पुमपत्यमृतौ एकाहो विधीयते। अत एव द्वितीयेन वाक्येन कुलाचारात्तृतीयवर्षा-दूर्ध्वं चूडोत्कर्षे त्रिरात्रं विधीयते। वाक्यद्वये श्रुतमपि पुंस्त्व-मनुवाद्यगतत्वादविवक्षितं तेन त्रिवर्षोत्तरं कन्यामरणे दाहोपि प्राप्नोति। एवञ्च—त्रिवर्षोर्ध्वे कन्यामरणेपि प्राप्तं त्रिरात्रमनूद्य तृतीयवाक्यपूर्वार्द्धेन उत्तरावधिः समर्थ्यते या त्रिरात्राच्छुद्धिर्भवेत्सा संस्कारकर्मणोऽर्वागिति त्रिभिः पादैरुक्त्वैव चतुर्थपादेन कन्याविषये त्रिरात्रापवादेनैकाहो विधीयते। एवञ्चापवाद्यापवादकयोः समानविष-यत्वलाभात् कन्याया अपि त्रिवर्षोर्द्ध्वं मृतावेकाहः सिध्यति त्रिव-र्षात्तु सद्यः। एतेनाजन्मनस्तु चूडान्तमिति पूर्वोक्तब्रह्मपुराण-वाक्यगतचूडान्तमित्यस्य द्वितीयतृतीयवर्षान्तं यावदिति शुद्धिविवेक-व्याख्यानमपास्तम्। तस्माद्विज्ञानेश्वरमतमेव सम्यगिति

दिक् । अनिष्कृष्टा माधवादिग्रन्था अप्येतत्परतयैव योजनीया इति दिक् ।

इति श्रीमन्मीमांसकभट्टनीलकण्ठात्मजभट्टभानुकृतद्वैत-निर्णयसिद्धान्तसंग्रहेऽनूढकन्यामृतावाशौचनिर्णयः ।

## अथ सन्निपाताशौचनिर्णयः ।

तत्र त्र्यहशावमध्ये दशाहसूत्याशौचपाते पूर्वशेषेण शुद्धिर्नवा। तथा दशाहसूत्याशौचनवमाहे त्र्यहशावपाते पूर्वेण शुद्धिर्नवेति। तत्राद्य-द्वैते पूर्वेण शुद्धिर्नेति विज्ञानेश्वरः । तेन हि सामान्यतो याज्ञवल्क्यवाक्यम् 'अन्तरा जन्ममरणे शेषाहोभिर्विशुध्यती'त्युक्त्वा एतदपवादद्वयमुक्तम्—

स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि ।
न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुद्ध्यतीति-उशनोवाक्यम् ।
शावाशौचे समुत्पन्ने सूतकं तु यदा भवेत् ।
शावेन शुद्ध्यते सूतिर्न सूतिः शावशोधिनी ॥

षट्त्रिंशतमतं चापरमिति । सजातीयविषमाशौचसन्निपाते दीर्घेण शुद्धिः । विजातीयसमकालीनाशौचयोरन्तरा सन्निपाते शावेन शुद्धिः । एवञ्च—सामान्यवाक्येन सह एकमूलकल्पनालाघवं भवति। स्वल्पशावाशौचेन दीर्घसूत्याशौचनिवृत्तावपि तात्पर्यमुच्यते तदा मूलान्तरकल्पनेति गौरवम् । तस्माच्छावेन स्वल्पेन न दीर्घसूत्याशौच निवृत्तिरित्ति विज्ञानेश्वरमतम् ।

माधवोऽप्येतदभिप्रायेणैव दशाहसूत्याशौचे दशाहशावपाते शावमेव कार्यमित्युक्त्वा षट्त्रिंशन्मतमेदर्थकमङ्गिरोवाक्यं चोदाहृतवान् । मदनोऽप्येवम् । रुद्रधरस्तु—लघुशावेन दीर्घसूतकस्यापि निवृत्तिरित्याह—तथाच कूर्मपुराणे—

अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसी ।
मरणोत्पत्तियोगे तु गरीयो मरणं भवेत् ॥ इति ॥

अत्र समकालमसमकालीनं वा मरणं गरीय इत्यभिप्रेत्योत्तरार्द्धं पूर्वार्द्धापवादकम् । तेन पूर्वोक्तार्थसिद्धिरिति तदयुक्तम् । अत्राद्यार्द्धेन सजातीयविजातीयविषमाशौचसन्निपाते गरीयसा शुद्धिरुक्ता । उत्तरार्द्धेन समकालीनविजातीययोः सन्निपाते शावेनैव शुद्धेरुक्तत्वान्न विरोध इति नापवादः । एवञ्च—मरणस्य पूर्वभावित्वेऽन्तराजन्ममरणे इत्यनेनैकमूलकल्पनालाघवमुत्तरभावित्वे तु न सूतिः शावशोधिनीत्यनेनेति । अन्यथा मूलान्तरकल्पनाद् गौरवं स्यादिति । अघानामित्यस्य पूर्वोक्तार्द्धकरणाद्दशाहसूत्याशौचनवमाहोरात्रे त्र्यहशावपाते पूर्वेणैव शुद्धिः । न सूतिश्शावशोधिनीत्यस्य समानकालीनाधिक्ययोः प्रवृत्तेरुक्तत्वाच्चेति । अनेनैव न्यायेन त्र्यहसूतकोपान्त्ये पक्षिण्येकाहशावपाते पूर्वशेषेण शुद्धिरिति ।

इति सन्निपाताशौचे प्रथमद्वितीयद्वैतनिर्णयः ।



तत्र स्वल्पाशौचशेषेण दीर्घाशौचस्य शुद्धिः क्वाप्यस्ति न वेति सन्देहे विज्ञानेश्वरमते नास्तीदृशो विषयः । माधवलिखितदेवलवाक्यलिखनान्माधवमते तु "परतः परतः शुद्धिरघवृद्धौ विधीयते ।

स्याच्चेत्पञ्चतमादह्नः पूर्वेणैवात्र शिष्यत" इति देवलवाक्यादस्ती दृशो विषयः । अस्य चायमर्थः—स्वल्पपूर्वाशौचात्परतस्तन्मध्ये दीर्घाशौचे सति परतः परेणैव दीर्घेणैव शुद्धिः, उत्तरार्द्धमस्यापवादः यत्र हि परतः परस्य दीर्घाशौचस्य पञ्चतमादह्नः परतः स्वल्पाशौचमनुवृत्तं स्यात् तत्र पूर्वेणैव स्वल्पाशौचशेषेणैव शुद्धिः शिष्यते विधीयते । अत्र सार्वविभक्तिकस्तसिः । तेन कुत्रचित्सप्तम्यर्थे षष्ठ्यर्थे तृतीयार्थे च भवति । अत्रोदाहरणं गर्भपातनिमित्तषडहाशौचमध्ये दशाहाशौचं चेत्स्यात्तदा पूर्वाशौचमुत्तराशौचार्द्धाधिकं भवति तदा पूर्वेणैव शुद्धिः । एवं क्षत्रियाद्याशौचेपि योज्यम् । पञ्चेत्याशौचार्द्धोपलक्षणम् । अत्रोदाहरणं मृग्यम् । शुद्धिविवेके तु—

आद्यभागद्वयं यावत्सूतकस्य तु सूतके ।
द्वितीये पतिते चाद्यात्सूतकाच्छुद्धिरिष्यते ॥
एतदूर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृता ।
एवमेव विचार्यं स्यान्मृतके मृतकान्तरे ॥

इति ब्रह्मपुराणवाक्यानुरोधेन देवलवाक्यमेवं व्याख्यातम् । तथा हि—पूर्वाशौचस्य पञ्चतमादह्नः अर्द्धात्परतः सजातीयं समकालीनं द्वितीयं चेद्भवति तदोत्तरणैव शुद्धिः । यदा तु पञ्चमादह्नो मध्ये द्वितीयाशौचं तदा पूर्वेणैवेति । तदिदं विज्ञानेश्वरमाधवाद्य लिखनात् 'अथ यदि दशरात्राः संनिपतेयुराद्यं दशरात्रमाशौचमानवमदिवसादिति' बौधायनवाक्यविधानाच्च निर्मूलत्वेनोपेक्ष्यमेवेति ।

इति सन्निपाताशौचे तृतीयद्वैतनिर्णयः ।



तत्र त्र्यहपक्षिण्याद्याशौचे तत्समकालान्तराशौचे पूर्वेणैव शुद्धिः। अन्तरा जन्ममरणे शेषाहोभिर्विशुद्धिः 'अन्तरा जन्ममरणे शेषाहोभिर्विशुद्ध्यतीति' सामान्यतो यज्ञावल्क्यस्मरणात्। यत्तु—पुनः पाते दशाहात्प्राक् पूर्वेण सह गच्छति। 'दशमेह्नि पतेद्यस्याहद्वर्यात्स विशुद्ध्यति। प्रभाते तु त्रिरात्रेण दशरात्रेष्वयं विधि'रिति देवलवचनं तत्रापि दशरात्रपदस्याशौचमात्रोपलक्षणत्वात्त्रिरात्रयोरपि सन्निपाते प्रवर्तते। एवञ्च याज्ञवल्क्येनैकमूलकल्पनालाघवं भवति। अन्यथा क्षत्रादीनां पूर्वशेषशुद्धिर्न स्यात्। न च तन्मात्रोपलक्षणं मूलान्तरकल्पनापत्तेः। अन्यथा त्रिरात्राद्याशौचमध्ये दशरात्रपाते प्रतिनिमित्तं नैमित्तिकावृत्तिन्यायादपवादपूर्वशेषशुद्धेरप्रवृत्त्या तदपवादकाघवृद्धौ 'आशौचे तु पश्चिमेन समापयेदि'त्यादिवाक्यानामप्यप्रवृत्त्या तेषामानर्थक्यं स्यादिति। एतदानर्थक्यादेव सामान्यवाक्यस्य देवलवाक्येनोपसंहारोपि न। एतेन त्रिरात्राशौचयोः सन्निपाते पूर्वशेषेण शुद्धिर्नेतिरुद्रधरोक्तिपास्तेरति दिक्।

इति सन्निपाताशौचे चतुर्थद्वैतनिर्णयः।



मातुर्दशाहे पितुर्मरणे पितुर्दशाहेनैव शुद्धिः। पितृदशाहे मातृमृतौ पक्षिणी अधिका कार्या। तथा च शङ्खः—

मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता।

पितुः शेषेण शुद्धिः स्यान्मातुः कुर्याच्च पक्षिणीमिति।

अत्र दशमाहोरात्रे तदन्त्ययामे वा किं 'रात्रिशेषे द्व्यहाच्छुद्धिर्यामशेषे शुचिस्त्र्यहादि'त्यनेन पक्षिणी बाध्यते। पक्षिण्या

वा तौ बाध्येते इति संशयः । तत्र द्व्यहत्र्यहयोर्दशमाहोरात्रतदन्त्ययामयोः प्रवृत्त्या विशेषरूपत्वं, मातापितृविषये तद्भिन्नविषयेऽपि च प्रवृत्त्या सामान्यरूपत्वम् । एवं पक्षिण्या अपि मातापितृमात्रविषये प्रवृत्त्या विशेषरूपत्वं, दशमाहोरात्रात्पूर्वं दशमाहोरात्रतदन्त्ययामयोश्च प्रवृत्त्या सामान्यरूपत्वम् । अतो न सामान्यविशेषन्यायेन बाध्यबाधकभावः । अत एव न सावकाशनिरवकाशन्यायेनापि । न च विकल्पः । त्रयोदशाहादावयं शुद्धोऽशुद्धश्चेति वस्तुनि विकल्पायोगात् । न च नवमदिनं यावत्पक्षिणी, दशमदिनतदन्त्ययामयोर्द्व्यहत्र्यहावित्यपि व्यवस्था नियन्तुं शक्या । मातापितृविषयेऽहोरात्रयामशेषयोः पक्षिण्येव तद्भिन्नविषये तु द्व्यहत्र्यहावित्यपि व्यवस्थासंभवेन विनिगमकाभावादिति पितामहचरणाः । तस्मादत्रोभयोर्नित्यं प्रवृत्त्या समुच्चय एवाङ्गीकार्यः । न च द्वादशे जैमिनिनाऽधाने एका देया षड् देया द्वादश देया इत्यादिदक्षिणापरिमाणानां समुच्चये संख्यान्तरोपजननापत्तेर्न कापि संख्यानुष्ठिता स्यादित्यनेन हेतुना समुच्चयपूर्वपक्षं निरस्य संख्यानां विकल्प इति सिद्धान्तितं तेन चात्र विरोधः । अधिकसंख्यया न्यूनसंख्यायाः प्रसङ्गसिद्धेर्द्वयोरप्यनुष्ठानसिद्धिरूप एव समुच्चयोऽङ्गीकार्यः । अतः पूर्वविषये द्व्यहत्र्यहावेवानुष्ठेयौ ताभ्यामेव पक्षिण्या प्रसङ्गसिद्धिरिति । अत एव जैमिनिनैव समासे गवामयने बहुषु गणेषु द्वादशाहस्येति द्वादशाहाल्लिङ्गातिदेशेन द्वादशोपसदः प्राप्ताः आयुर्गोज्योतिरित्याद्यल्पेष्वहस्सु ज्योतिरादिधर्मास्त्र्युपसदादयो नामातिदेशेन प्राप्तास्तत्र लिङ्गातिदेशेन पूर्वपक्षमुक्त्वा तत्र च द्वादशोपसत्त्वानुवादाल्लिङ्गदर्शनमुक्तम् ततो नामधेय-

प्राबल्येन सिद्धान्त उक्तः । पूर्वपक्षोक्तलिङ्गदर्शनोपपत्तिस्त्वेवम् । बह्वल्पधर्मविरोधे भूयसां स्यात्सधर्मत्वमिति न्यायेन गवामयने भूयोंहःसाद्गुण्याय द्वादशोपसत्त्वमेव कार्यं तेनैव त्र्युपसत्कानां ज्योतिराद्येकाहयागानामपि न वैगुण्यं द्वादशसु तिसृणामन्तर्भावाद्विति । स्मार्त्तेपि महालयतदन्तर्गतान्वष्टकाश्राद्धयोः सहानुष्ठाने बहुदैवत्यपिण्डदानेनान्वष्टकासंबन्धिनवदैवत्यपिण्डदानप्रसिद्धिरिति मातृमृतौ तस्मात्पितृदशाहे मातृमृतावानवमं पक्षिणी । अन्त्यदिनतदन्त्ययामयोस्तु व्यहत्र्यहावेवेति सिद्धम् । अत एव पितृदशमाहोरात्रे तदन्त्ययामे वा मातृमृतौ पक्षिणी । तत्रैवान्यसपिण्डमृतौ तु व्यहत्र्यहाविति नानौचित्यम् । एवं मातृदशाहे तदन्त्ययामे वा पितृमृतौ संपूर्णमेव न द्व्यहत्र्यहाविति दिक् ।

इति पक्षिणीत्र्यहादिबलाबलद्वैतनिर्णयसिद्धान्तसंग्रहो भट्टभानुकृतः ।



## अथ द्वैतान्तरनिर्णयः ।

तत्र 'रात्रिशेषे द्वाभ्यां प्रभाते तिसृभिरि'ति शातातपवाक्यविहितव्यहत्र्यहमध्ये संपूर्णसजातीयविजातीयाशौचपाते किं पूर्वेण शुद्धिरुत नेति सन्देहः । तदर्थमिदं विचार्यते । किमयं पूर्वाशौचवृद्धिविधिरुतोत्तराशौचह्रासविधिरिति । तत्र एकाहाशौचे आशौचान्तरपाते 'अन्तरा जन्ममरणे शेषाहोभिर्विशुद्ध्यतीति' याज्ञवल्क्यवाक्येन पूर्वाशौचशुद्धौ प्राप्तायां रात्रिशेष इत्यादिस्तदपवादस्तेन

रात्र्यादिशेषे पूर्वशेषमात्रेण न शुद्धिः किन्तु द्व्यहत्र्यहयुक्तपूर्वशेषेणैव ततश्च पूर्वाशौचस्यैव द्वादशाहत्रयोदशाहरूपेण महत्त्वात्तत्र जातं तृतीयाशौचं पूर्वेणैवापगच्छति तेन तृतीयाशौ ' सर्वं न कर्तव्यमिति केचित्। तन्न अन्तरा इत्यादि विधिना न पूर्वाशौचे कश्चिद्गुणो विधीयते। किन्तु "प्रतिनिमित्तमितिन्यायेन द्वितीयं संपूर्णं प्राप्तं तत्र ह्रासरूपगुणो विधीयते। तदपवादश्च रात्रिशेष इत्यादिः। तेनायमत्र निष्कर्षः—पूर्वाशौचमध्ये उत्तराशौचस्य यावन्ति नवाष्टसप्तषडादिदिनानि तैरेवोत्तराशौचं गच्छति इति ह्रासविधिः। रात्र्यादिशेषे तु पूर्वान्तर्गतोत्तराशौचकालमात्रेण न शुद्धिः किन्तु व्यहत्र्यहाधिकतत्कालेनेति ह्रासविशेषो विधीयते। स चाल्पस्तत्र तृतीयसंपूर्णाशौचे न पूर्वेण शुद्धिः किन्तु सम्पूर्णमुत्तरं कार्यम् अघवृद्धिमदित्यादिवाक्यादिति दिक्।

## अथाशौचान्तरसन्निपाते निर्णयः।

मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता।
पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम्॥

इत्यत्र चतुर्थचरणेन पित्राशौचे मातृमृतौ दशमाहोरात्रात्पूर्वं पूर्वशेषेण शुद्धिप्राप्तावधिका पक्षिणी विधीयते। तदपवादत्वेन पूर्वोक्तन्यायात्। तत्राधिका पक्षिणी मध्ये सपिण्डाशौचान्तरपाते क्वचित्पूर्वशेषेण शुद्धिः क्वचिन्न। तत्राद्योदाहरणम्। यदा पित्राशौचद्वितीयाहे मात्राशौचं तदा नवाहोरात्राणि पित्राशौचशेषः पक्षिणी चाधिका एवं सार्द्धदशाहोरात्राणि मात्राशौचं तन्मध्ये तृतीयाशौचपातस्य पूर्वेण शुद्धिः पूर्वस्य महत्त्वात्। यदा तु तृतीया-

द्यहोरात्रसन्निपाते तदाऽष्टाहोरात्राणि पितृमात्राशौचशेषे पक्षिणी चाधिका एवं सार्द्धनवाहोरात्राणि मात्राशौचं तन्मध्ये तृतीयं दशाहाशौचं तस्य न पूर्वेण शुद्धिः पूर्वाशौचस्याल्पत्वात् । अघवृद्धिमदितिवचनादुत्तर-मेव सर्वं कार्यमेवमुत्तरदिनेष्वपीति दिक् ॥

॥ अथाशौचान्तरसन्निपाते निर्णयः ॥

यदा प्रथमाशौचदशमाहः शेषे यामशेषे वा द्वितीयाशौचं भवति तदा पूर्वशेषेण शुद्ध्यपवादेन द्व्यहस्त्र्यहो वाऽनुष्ठेयः द्व्यहत्र्यहान्त्यदि-नेन्त्ययामे तृतीयं सम्पूर्णमाशौचं भवति तदा रात्रिशेष इति वाक्यं न प्रवर्तत इति सिद्धान्तः। तथा हि-यत्र पूर्वशेषशुद्धिविधायकवाक्येन द्विती-याशौचह्रासो विधीयते तदपवादत्वेन द्व्यत्र्यहरूपह्रासविशेषोऽनेन विधी-यत इति पूर्वमुक्तम्। ततश्च यद्विहितो द्व्यहस्तत्पूर्वस्य दशमरात्रसहि-तत्र्यहात्मकमेवं यामशेषे जातं यामाधिकत्र्यहात्मकं तच्चाल्पं तेन नो-त्तरतृतीयसंपूर्णाशौचनिवृत्तिः । त्र्यहपक्षिण्यादेस्तु भवत्येवेति दिक् ॥

इति श्रीमन्मीमांसकभट्टनीलकण्ठात्मजभट्टभानुकृते
द्वैतसिद्धान्तसंग्रहे सन्निपाताशौचनिर्णयः ॥



दत्तकपुत्रमरणे सापिण्ड्याद्दशाहाशौचमाचरन्ति तत्प्रतिग्रहीतृत-त्पत्नीतत्पुत्रान्तरादयः सर्वे इति शिष्टाचारः। तत्र विरुद्धं याज्ञवल्क्य-वाक्यम्। अनौरसेषु पुत्रेषु भार्यास्वन्यगतासु चेति । अत्र विज्ञाने-श्वरः । अहरित्यनुवर्तते । अनौरसाः क्षेत्रजदत्तकादयस्तेषु जातेषु उपरतेषु वाहोरात्रमाशौचम्। तथा भार्यास्वन्यगतासु अन्त्यप्रतिलोमव्य-तिरिक्तमाश्रितासु अतीतासु अहोरात्रमेव न पुनः सत्यपि सापिण्ड्ये

दशरात्रं प्रतिलोमाश्रितासु त्वाशौचाभाव एव 'प्रतिलोमा धर्महोना' इति वचनात्। 'पाखण्ड्यनाश्रिता स्तेना' इति प्रतिषेधाच्च । सपिण्डानां तु स्नानमात्रम्।

अन्याश्रितेषु दारेषु परपत्नीसुतेषु च ।
गोत्रिणः स्नानशुद्धाः स्युस्त्रिरात्रेणैव तत्पिता ॥

इतिप्रजापतिवचनात्। यमाश्रितास्तस्यापि त्रिरात्रं प्रकृत्य विष्णुः

अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ।
परपूर्वासु भार्यासु प्रसूतासु मृतासु चेति ॥

अनयोस्त्रिरात्रैकरात्रयोः सन्निधिविदेशभेदेन व्यवस्था । यदा पितुस्त्रिरात्रं तदा सपिण्डानामेकरात्रम् ।

सूतके मृतके चैव त्रिरात्रं परपूर्वयोः ।
एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः ॥

इतिमारीचात्। गोत्रिणां स्नानविधानं समानोदकेन विषम- इति माधवः। पितामहचरणास्तु जनकसपिण्डानामुपनयनात्प्राक् यत्रैकाहपक्षिणी तत्प्रतिग्रहीतृसपिण्डानां स्नानं जनकसपिण्डानां यत्र त्रिरात्रं तत्र प्रतिग्रहीतृसपिण्डानामेकाहः पितुस्त्रिरात्रैकरात्रयोस्सन्निधिविदेशभेदेनैव व्यवस्था। तत्रापि जनकस्य यत्र नामकरणादूर्ध्वं प्रागुपनयनात्तु बैजिकसम्बन्धात्त्रिरात्रं विहितं तत्रानयोर्व्यवस्था। तेनोपनीतमरणे दशाहमेव सुस्थं सर्वेषां सपिण्डानां पित्रोश्चेति दिगित्याहुः॥

॥ इति दत्तकाशौचद्वैतनिर्णयसिद्धान्तो भट्टभानुकृतः ॥

## ॥ अथ देशान्तरमृताशौचम् ॥

"प्रोषिते कालशेषः स्यात्पूर्णे दत्त्वोदकं शुचिरि"ति वाक्यं विज्ञानेश्वरेण व्याख्यातम् । प्रोषिते यत्र स्थिते प्रथमदिन एव सपिण्डजननादि न श्रूयते तादृशदेशान्तरस्थे जाते मृते वा कालशेषो दशाहादिशेषस्स एव शुद्धिकारणं पूर्णे दशाहाद्यतीते स्नात्वोदकं दत्वा शुचिरिति "निर्दशज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च । सवासा जलमाप्लुत्य शुद्धो भवति मानव" इति मनुवचनात् । अस्मिन्नेव देशान्तरस्थे । "मासत्रये त्रिरात्रं स्यात्षण्मासात्पक्षिणी भवेत् । अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यती"ति बृद्धवशिष्ठवाक्यं योजितम् ऊर्ध्वं दशम्यां पक्षिणीमिति गौतमीयमूर्ध्वदशाहाच्छ्रुत्वैक रात्रमिति वाशिष्ठं च मासत्रयादूर्ध्वं मासषष्ठं षष्ठादूर्ध्वंमासनवमंयावत्क्रमेण ज्ञेयम् । एवमेषु वाक्येषु देशान्तरशब्दाभावात्पारिभाषिकदेशान्तरे न प्रवृत्तिः किन्तु पूर्वोक्तसमानदेश एव 'महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः । वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यत इति' मनूक्तदेशान्तरे । "देशान्तरं वदन्त्येके षष्टियोजनमायतम् । चत्वारिंशद्वदन्त्येके अन्ये त्रिंशत्तथैव चेति बृहस्पत्युक्त च । देशान्तरे तु यो मृतस्तत्सपिण्डानां दशाहोत्तरं मासत्रयेपि स्नानमात्रमेव । तथा च—स्मृतिः 'देशान्तरमृतं श्रुत्वा क्लीबे वैखानसे पतौ । मृतौ स्नानेन शुद्ध्यन्ति गर्भस्रावे च गोत्रिणः' । इति विज्ञानेश्वरमतम् ।

पराशरस्मृतिव्याख्याने माधवस्तु परिभाषितदेशान्तरे मृतस्य सपिण्डानां दशाहोत्तरं सार्द्धमासमध्ये त्रिरात्रमूर्द्ध्वं समान-

देशत्वात् । तथा च विष्णुः—'अर्वाक् त्रिपक्षात्त्रिनिशं षण्मासाच्च दिवानिशम् । अहः संवत्सरार्द्वाग् देशान्तरमृतेष्वपीति' । अत्र दिवानिशमित्यत्र दिवाशब्देनाहर्द्वयं गृह्यते । अग्रेऽहर्मात्रविधानात् । अत एव—देवलवाक्ये षण्मासात्पक्षिणीमित्युक्तम् । अतो न पौनरुक्त्यम् । यत्तु—पराशरस्मृतिस्थं "देशान्तरे मृतः कश्चित्सगोत्रः श्रूयते यदि । न त्रिरात्रमहोरात्रं सद्यः स्नात्वा शुचिर्भवेदि"ति तत्संवत्सरोर्द्ध्वं ज्ञेयम् । यत्तु मनुवचनं—"बाले देशान्तरस्थे च पृथक् पिण्डे च संस्थिते । सवासा जलमाप्लुत्य सद्य एव विशुद्ध्यति"॥ इति तत्र देशान्तरस्थे पृथक्पिण्डे इतिव्याख्यातम् । "भृग्वग्निमरणे चैव देशान्तरमृते तथा । बाले प्रेते च सन्यस्ते सद्यः शौचं विधीयते"॥ इति पराशरवाक्यान्तरं च मनुवाक्यसमानार्थकमेव व्याख्येयमिति । तस्माद्देशान्तरे आत्रिपक्षात्त्रिनिशमिति वचनम् । समानदेशे तु मासत्रये त्रिरात्रमिति व्यवस्थेत्याह ।

अत्र पितामहचरणाः—आत्रिपक्षादिति देशान्तरगर्भविष्णुवचनसद्भावात्स्नानं देशान्तर इति विज्ञानेश्वरमतं न सम्यगित्याहुः । श्रुत्वा चोर्द्ध्वं दशम्याः पक्षिणीमित्यादिदेशान्तरगर्भाणां वाक्यानां देशान्तरविषयत्वेन व्याख्यानं माधवोक्तमपि न युक्तम् । अत्र समानदेशेन मासं यावदेकाहः ऊर्ध्वं स्नानमात्रं देशान्तरे तु नवमासोत्तरमप्येकाहः संवत्सरं यावदित्यनौचित्यपरिहारार्थं विष्णुवचनस्थमहःसंवत्सरादर्वाक् इति संवत्सरपदं पादोनसंवत्सरपरं व्याख्येयमिति । एवं देवलवाक्यगतवर्षपदमपीति सर्वं सुस्थमिति ।

त्रिपक्ष्यां त्रिदिनं पक्षिण्यां षष्ठान्नवमावधिः ।
एकाहस्तदनु स्नानं देशान्तरमृते स्मृतम् ।
त्रिमास्यां त्रिदिनं पश्चाद् देशान्तरवदिष्यते ।
एकदेशेन तत्स्नानमात्रं देशान्तरे मृतौ ।
अविशेषाद्दशाहोर्ध्वमिति सम्यङ् मतं मतम् ।
नापि त्रिपक्ष्यां त्रिदिनं षष्ठोर्द्ध्वं चाहरित्यदः ।

इति देशान्तरमृतद्वैतनिर्णयसिद्धान्तसंग्रहः ॥



## अथाशौचान्तरनिर्णयः ॥

यत्राशौचान्त्याहोरात्रेन्त्ययामे वा त्र्यहमाशौचं पतति तत्र पूर्वशेषेण शुद्धौ प्राप्तायां रात्रिशेष इति प्रवर्त्तते इति निर्विवादम् । अत एव-विज्ञानेश्वरेणान्तरा जन्ममरणे शेषाहोभिर्विशुद्ध्यतीत्यस्य बहुवचनाविवक्षाभिप्रायेण रात्रिमात्रशेषे प्रवृत्तिमङ्गीकृत्य रात्रिशेषे सति द्वाभ्यामिति गौतमीयवाक्यस्यापि तदपवादप्रवृत्तिरङ्गीकृता । तस्मात् त्र्यहाशौचपाते पूर्वशेषशुद्ध्यपवादत्वेन द्व्यहत्र्यहशुद्धिविधायकं वाक्यं प्रवर्तते इति सिद्धम् । यत्र तु रात्रिशेषयामशेषे वा पक्षिण्येकाहयोः प्रसक्तिस्तत्र पूर्वशेषशुद्धिविधेरुत्सर्गस्य प्राप्तावपि तदपवादो द्व्यहत्र्यहविधिर्न प्रवर्त्तते । रात्रिशेषे सति द्वाभ्यां प्रभाते तिसृभिरित्यस्यापूर्वविधित्वापत्तेः न चायमपूर्वविधिः किन्तु प्रतिप्रसवः पूर्वप्रपिष्टतान्यायात् । तथा हि-यत्र हि रात्रिशेषे यामशेषे वा दशाहादिप्राप्तं तत्र तन्मध्ये द्व्यहत्र्यहयोः प्राप्तयोः शेषाहशुद्धिं विना तद्बाधे प्राप्ते द्व्यहत्र्यहविधिर्द्व्यहत्र्यहोज्जीवनेन प्रतिप्रसवो भवति । एवं यत्र रात्रिशेषे त्र्यहाशौचपातस्तत्रापि

शेषशुद्धिविधिना बाधितत्र्यहोज्ञोकनेन प्रतिप्रसवो युक्त एव। यत्र तु यामशेषे त्र्यहाशौचं येषां रात्रिर्द्विधा विभज्य पूर्वार्द्धं पूर्वाहोरात्रशेषः येषां च रात्रिं त्रेधा विभज्याद्यभागद्वयं पूर्वशेषस्तेषां पूर्वाशौचापेक्षया आधिक्य-त्र्यहस्य प्राप्तत्वात्तस्य शेषाहोभिरित्यपवादप्राप्तौ यामशेषे इति प्रतिप्रसवो युक्त एव । येषां तु यस्याहस्तस्य शर्वरीतिपक्षस्तेषामधिकत्र्यहस्याप्राप्त-त्वान्न प्रतिप्रसवः किन्तु पूर्वशेषेणैव शुद्धिरिति पितामहचरणाः ।

ममतु प्रतिभाति नायं प्रतिप्रसवः किन्त्वपूर्वविधिरेव तथाहि यदिह्ययं रात्रिशेषे द्व्यहाच्छुद्धिरिति तत्पूर्वशेषशुद्धिरपवादः स्यात्तदा स्यात्प्रतिप्रसवः न चासौ तदपवादः किन्तु रात्रिशेषे द्वाभ्यामित्यस्य तथा च यामशेषे त्र्यहपाते पूर्वशेषशुद्ध्यपवादत्वेन रात्रिशेषे सति द्वाभ्यामित्यादिभिर्द्व्यहप्राप्तौ तदपवादत्वे त्र्यहविधिरयमपूर्वविधिरेव तस्माद्यस्याहस्तस्य शर्वरीतिपक्षे न पूर्वशेषेण शुद्धिः किन्तु त्रिरात्रेणैव नचैवं पक्षिण्येकाहयोरपि तथा स्यात् रात्रिशेषे सति द्वाभ्यामित्यप-वादस्य प्रतिप्रसवत्वे तत्राप्रवृत्त्या तदपवादस्येति तत्राप्रवृत्तेरिति । तस्माद्रात्रिशेषे यामशेषे वा पक्षिण्येकाहयोः प्राप्तौ न द्व्यहत्र्यहवृद्धिः किन्तु पूर्वशेषशुद्धिरिति संक्षेपः ।

इति रात्रियामशेषयोःपक्षिण्येकाहयोर्नद्व्यहत्र्यहनिर्णयः ॥

## ॥ अथ द्वैतान्तरसूतिकानिर्णयः ॥

पैठीनसिः—सूतिकां पुत्रवतीं विंशतिरात्राणि कर्माणि कार-येन्मासेन स्त्रीजननीमिति । अत्र जननप्रभृतिविंशतिरात्रं त्रिंशद्रात्रमि-त्युक्तम् । दशश्लोक्यां तु यस्य यावदाशौचं प्राप्तं तस्य तदाशौ-

चोत्तरमेव विंशतिरात्रं त्रिंशद्रात्रमिति । अनयोश्च पक्षयोः कः श्रेयानिति विचार्यते । तत्र केचित् दशश्लोकीकारमतं युक्तमाहुः जननप्रभृतिविंशतिरात्रविधौ विंशतिपदे प्राप्तदशाहांशोऽनुवाद इति । विध्यनुवादवैरूप्यापत्तेः । एवं मासपदेपि तस्माद्यस्य वर्णस्य यावदाशौचं प्राप्तं तस्य तदूर्ध्वमेव मासं विंशतिरात्रं च कर्मानधिकारोऽनेन विधीयत इति ।

वस्तुतस्तु-त्रिंशच्छ्लोकीकारमतमेव सम्यक् । तथा हि—दशपेयाधिकारस्थे हि दशदशैकं चमसमनुप्रसर्पन्ति शतं ब्राह्मणाः सोमान्भक्षयन्तीत्यत्र पूर्ववाक्येन चमसोद्देशेन भक्षणकर्तृपरिच्छेदकत्वेन दशसंख्या विधीयते । तथा च-दशसु चमसेषु प्रतिप्रधानमावृत्त्या शतसंख्या सिद्धा । तत्र नवचमसेष्वतिदेशतः कर्तृपरिच्छेदकत्वेन च ब्राह्मण्यस्य प्राप्तेरेककर्माङ्गत्वाज्जातिसंख्ययोरन्योन्यनियमेन सिद्धे उत्तरवाक्येन शतानुवादेन ब्राह्मण्यविधौ कर्तृनवतौ ब्राह्मण्यं प्राप्तमनूद्यते यजमानचमसे राजन्यजातिबाधो विधीयत इति विध्यनुवादवैरूप्यमङ्गीकृतमेव । एवं विंशतिमासपदयोरपि प्राप्ताप्राप्तविवेकेन विना न कोपि दोष इति । किञ्च विधेश्चोद्देश्यनिष्ठानुवादेन विरोधो नानुवादमात्रेण । यथा 'वषट्कर्तुः प्रथमभक्ष' इत्यत्र भक्षानुवादेन प्राथम्यविधौ ।

वस्तुतस्तु—अत्राशौचं द्विविधम् । कर्मानधिकारोऽस्पृश्यत्वं च । तत्रोभयोरपि पूर्वावधिर्जननदिनमुत्तरावधिर्दशमादिदिनमितिप्राप्तं तत्र पुत्रजननीं विंशतिरात्रेण कर्माणि कारयेदिति पैठीनसिवाक्येन कर्मानधिकारलक्षणाशौचे उत्तरावधिदशमादिदिनबाधेन विंशतिरात्रेण कर्माणि कारयेदिति विंशतितमं दिनं विधीयते । एवं स्त्रीजनने त्रिंशत्तममिति ।

अन्यथा पतितादिवत् पूर्वोत्तरावधिविशिष्टापूर्वकर्मानधिकारविधानान्म- हद्गौरवमिति। यथा—अवभृथस्य दीक्षितोन्मोचनार्थत्वाद्दीक्षितो न जुहोतीत्यत्राग्निहोत्रानधिकारोवभृथावधिकः प्राप्त एतया पुनराधेयसम्मि- तयेष्ट्वा अग्निहोत्रं जुहोतीत्यनेनाग्निहोत्रानधिकारप्राप्तपूर्वावधिवा- धेनोद्धेसानीयरूपावध्यन्तरं विधीयते एवमिहापीति। इदञ्च वाक्यं त्रिवर्णविषयमेव न शूद्रजातौ प्रवर्तते। तत्र मासं विंशतिदिनञ्च कर्मा- नधिकारस्य सिद्धत्वात्। तस्माज्जननप्रभृत्येवायं कर्मानधिकार इति।

इति स्त्रीपुंसजनने कर्मानधिकारावधिनिर्णयो भट्टनील- कंठात्मजभट्टभानुकृतः समाप्तः ॥



## अथ संसर्गाशौचेऽधिकारनिर्णयः।

आशौचं यस्य संसर्गादापतेद् गृहमेधिनः।
क्रियास्तस्य न लुप्यन्ते पुत्रादीनां च तद्भवेदिति।

अत्र सर्वाशौचेषु सामान्यप्राप्तस्य क्रियालोपस्य संसर्गाशौचे क्रियास्तस्य न लुप्यन्त इत्यनेनापवादः क्रियते। संसर्गाशौचं च निर्हरणाद्याशौचं तन्निर्हरणकर्तृभिन्नानामप्रसक्तमेवातस्तदनुवादकम्। गृह्याणां च न तद्भवेदितिव्यर्थं सत् तेषां वैश्वदेवादिकर्तृत्वप्रतिपादनप- रत्वेनार्थवत्। तस्मात्संसर्गाशौचिना पुत्रादिद्वारा क्रिया कार्या न साक्षादिति फलितम्। एतेन मदनपारिजाते यत् श्रौतस्मार्ताग्नि- साध्याग्निकर्मविषयएवायं 'क्रियस्तस्य न लुप्यन्त' इति यथा सपिण्डा- शौचे प्रत्यूहेन्नाग्निषु क्रियेतिवदितीत्युक्तं तदपास्तम्। किंच यद्यग्नि- साध्यक्रियाविषयमेवेदं वाक्यमिति सिद्धान्तस्तत्रान्यद्वारैव न साक्षात्

गृह्याणां च न तद्भवेदिति वाक्यशेषात् । न च

एकाहाच्छुद्ध्यते विप्रो योऽग्निवेदसमन्वितः ।
त्र्यहात्केवलवेदस्तु द्विहीनो दशभिर्दिनैः ॥

इतिवाक्येन सपिण्डाशौचादौ सामान्यप्राप्तस्य 'प्रत्यूहेन्नाग्निषु क्रिया' इत्यस्मादहोरात्रेऽपवादात् क्रियालोपे प्रसक्ते क्रियास्तस्य न लुंप्यन्त-इत्यनेनान्यद्वारैवाग्निसाध्यक्रियास्वेवायं प्रतिप्रसवः क्रियत इति वाच्यम् । एकाहाच्छुद्ध्यत इति वाक्यस्य मेधातिथ्यादि निबन्धेषु दशाहादिस-पिण्डाशौचप्रकरण एव लिखनान्निर्हरणाद्याशौचेऽप्रवृत्तिः । तत्र हावयेन्न तु हापयेदित्येतत्सहितस्य प्रत्यूहेन्नाग्निषु क्रियेत्यस्यैव प्रवृत्त्याग्नि-साध्यकर्मसु प्रथमाहोरात्रादौ सिद्ध एवाधिकारः । अतः क्रियास्त-स्येति व्यर्थं सदनग्निसाध्यक्रियास्ववाधिकारं विधत्ते । किं तु-प्रत्यूहेन्नाग्निषु-हावयेन्न तु हापयेदित्यनयोरपि सपिण्डाशौचप्रकरण एवोक्तेर्निर्हरणाशौचेऽनग्निसाध्येषु क्रियास्तस्येति वाक्येनाधिकारो बोध्यत इति समाधानमाहुः केचित् । तन्न । प्रत्यूहेन्नाग्निषु क्रिया एकाहादित्यनयोः सपिण्डाशौचप्रकरणाधीतयोर्गुरूपाध्याया-द्याशौचप्रवृत्त्यभावात्संसर्गाद्यस्य चान्यस्याप्यप्रवृत्तेस्तत्राग्निसाध्यकर्मा-नुष्ठानमिष्टं न सिद्ध्येदिति । ततः सकलशिष्टाचारविरोधश्च । तस्मादेका-हाच्छुद्ध्यत इत्यस्यैवाग्निसाध्यक्रियास्वयं प्रतिप्रसव इत्याशङ्का-परिहार एवं कर्त्तव्यः । तथा हि-'सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयत' इत्येतद्वाक्यं सूतकप्रवृत्त्यनन्तरमेव प्रवर्तते । तन्मात्रोप-जीवनेनैव च प्रत्यूहेन्नाग्निषु क्रिया एकाहाच्छुद्ध्यते विप्रो हावयेन्न तु हापयेदित्यादिप्रतिप्रसववाक्यानां सपिण्डाशौचवत्संसर्गाशौचे गुर्वाद्या-

शौचेपि प्रवृत्तिरविशिष्टा। एवं क्रियास्तस्य न लुप्यन्त इत्यस्यापि एकाहाच्छुद्ध्यते इत्येतत्समकालमेव प्रवृत्तेनैतदपवादकत्वेनोत्तरकालं प्रवृत्तिरिति सिद्धम्। यथा हि न हिंस्यादिति निषेधो रागतः प्राप्त-मुपजीव्यैवाग्नीषोमीयं पशुमालभेतेत्येतत्समकालमेव प्रवर्तते न तदुत्तर-कालम्। एवमत्रापि। ननु सपिण्डाशौचप्रकरणाधीतानां प्रत्यूहे दित्यादीनां कथं संसर्गाशौचे प्रवृत्तिरिति चेदित्थम्—एतेषां परिभाषा रूपाणां प्रकरणेन संकोचायोगादिति सर्वग्रन्थसिद्धम्। तस्मात्क्रिया-स्तस्य न लुप्यन्त इत्येतत्प्रत्यूहेदित्यनेन तु तुल्यकालमेव प्रवर्तते न तदुत्तरकालमिति दिक्।

ममत्वेवं प्रतिभाति एकाहाच्छुद्ध्यत इति वाक्यं श्रीरामांडारभाष्ये चतुर्णां वरणे यद्यवृतः स्यात्तस्याशौचं स्यात्ततस्तं त्यक्त्वा तस्य स्थानेऽन्यमागमयेदित्युक्ते ज्योतिष्टोमे चतुर्णां वरणपक्षेऽवृतानामाशौचपाते त्याग एव। न च दर्शपूर्णमासादावव्रृतः सामिधेनीरन्वाहेत्युक्तेरवृतस्य सामिधेनीषु प्रवृत्तस्याप्याशौचे त्यागः स्यात्। वरणवत्येव कर्मणि वरणमारम्भोऽवरणवति दर्शपूर्ण-मासादौ तु स्वीयाद्यपदार्थकरणमेवारम्भ इति नियमादिति केचित्।

अन्ये तु यथा वरणवति वरणमारम्भो नावरण-वति—एवं ये वरणवन्तस्तान्प्रत्येव वरणारम्भोऽन्याँस्तु प्रति स्वीयाद्य-पदार्थकरणमेवारम्भ इति तस्माज्ज्योतिष्टोमेपि चतुर्णां वरणपक्षेऽन्ये स्वीयाद्यपदार्थप्रवृत्त्युत्तरमाशौचेऽपि न त्याज्याः। ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वतां न त्याग इतिवाक्यादप्यवृतानामपि न त्यागः। पूर्वोक्तभाष्यग्रन्थस्तु स्वीयाद्यपदार्थकरणाभावे योजनीय इति

युक्तमाहुः । ऋत्विक्त्वं विहाय वृतत्वं चमसाध्वर्युषु वर्तते वृतत्वं च विहाय ऋत्विक्त्वं चतुर्णां वरणपक्षेऽन्येषु वर्तते । अतः सामान्य-विशेषाभावाद्वरणवाक्यऋत्विग्वाक्ययोर्नोपसंहारः । तस्मादृत्विग्वाक्येन चतुर्णां वरणपक्षेऽन्येषां स्वपदार्थप्रवृत्त्युत्तरं दर्शपूर्णमासयोश्चावृतस्य होतुस्सामिधेनीषु प्रवृत्तस्याशौचाभाव उच्यते । वरणवाक्येन च वृतानां होत्रादीनां ऋत्विजामनृत्विजां चमसाध्वर्यूणां वरणवतामा-शौचाभाव उच्यते इति तस्माद्वरणवतां वरणोत्तरमन्येषां तु स्वीयाद्य-प्रवृत्त्युत्तरमाशौचपाते सति न त्याग इति निष्कर्षः ।

॥ इति श्रीमीमांसकभट्टनीलकण्ठात्मजभट्टभानुकृतो यज्ञादावाशौचपातनिर्णय इति ॥

## अथ श्राद्धाधिकारनिर्णयः ॥

विष्णुः—

पुत्रः पौत्रः प्रपौत्रौ वा भ्राता वाभ्रातृसंततिः ।
सपिण्डसन्ततिर्वापि श्राद्धार्हानुपजायते ।

मनु :—

पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ।

याज्ञ्यवल्क्यः— द्वादशविधपुत्रानुपक्रम्य—

पिण्डदोऽशहरश्चैषां पूर्वाभावे परः परः । इति ।

अत्र विष्णुवाक्ये प्रपौत्रोत्तरं दत्तकादय इति पितामहचरणाः । पितृचरणास्तु—औरसपुत्रोत्तरं दत्तकादयः । ततः पौत्रप्रपौत्राविति । तदुत्तरं पत्नी ततो दौहित्रः ।

तदुक्तं स्मृतिसंग्रहे—

पुत्रः कुर्यात्पितुः श्राद्धं पत्नी च तदसन्निधौ ।
धनहार्यथ दौहित्रस्तद्भ्राता वाथ तत्सुतः ॥
भ्रातुः सहोदरो भ्राता कुर्याद्दाहादि तत्सुतः ।

अत्र धनग्रहाभावेऽपि दौहित्रस्याधिकारो ज्ञेयः ॥

तथा च—भविष्यत्पुराणे—

यथा व्रतस्थोपि सुतः पितुः कुर्यात् क्रियां नृप ।
उदकाद्यां महाबाहो दौहित्रोऽपि तथार्हति ॥

पूर्ववाक्यस्थेन तद्भ्रातेत्यनेन मृतस्य भ्राता ग्राह्यो न दौहित्रस्य । अत एव तृतीयपादे भ्रातुः सहोदर इति स्पष्टमुक्तमिति पितामहचरणानामाशयः ।

मम तु प्रतिभाति । तद्भ्रातेत्यनेन धनहार्यपि गृह्यते तृतीयपादस्य वैयर्थ्यापातादिति । एवञ्च—पूर्वोक्तभविष्यदुक्तिः संगच्छते । व्यवहितभ्रातृपुत्राभावेपि पिता माता स्नुषा भगिनी भागिनेयादयः ।

तथाच—स्मृतिसंग्रहे—

पत्नी भ्राता दत्तपुत्रः पिता माता स्नुषा तथा ।
भगिनी भागिनेयश्च सपिण्डः सोदकस्तथा ।
असन्निधाने पूर्वेषामुत्तरे पिण्डदाः स्मृताः ।

अत्र पत्न्यनन्तरं भ्रातुः पाठेऽपि क्रमो न विवक्षितः । पूर्वं स्मृतिसंग्रहे दौहित्रोत्तरत्वक्रमस्याथशब्देनोक्तत्वात् । एवं पिता भ्राता तथाग्रजाः । जननी वापि संस्कुर्यान्महदेनोऽन्यथा भवेदिति भविष्यत्पुराणवचनेपि न क्रमविवक्षा । 'नपुत्रस्य पिता दद्यान्ना-

नुजस्य तथाग्रज' इति निषेधस्तु 'अपि स्नेहेन कुर्यातां सपिण्डीकरणं विनेति' बौधायनवचनात्स्नेहाभावे ज्ञेयः । समानोदकानन्तरं मातृपक्षसपिण्डादयः । तथा च विष्णुपुराणे—

तेषामभावे पूर्वेषां समानोदकसन्ततिः ।
मातृपक्षस्य पिण्डेन संबद्धा याजनेन वा ॥
कुलद्वयेऽपि चोत्सन्ने स्त्रीभिः कार्या क्रिया नृप ।
तत्संघातगतैर्वापि कार्याः प्रेतस्य सत्क्रियाः ।

अत्र स्त्रीपदमासुरादिविवाहोढापरम् । तदभावे शिष्यादयः । तथा च गौतमः । तदभावे शिष्यास्तदभावे ऋत्विगाचार्याविति । तदभावे सखा जामाता च ।

सख्युरुत्सन्नबन्धोश्च सखापि श्वशुरस्य च ।
जामाता स्नेहतः कुर्यादखिलं पैतृमैधिकम् ॥

इति मार्कण्डेयपुराणात् । तदुत्तरं स्त्रीहारी धनहारी च । तथाच कार्ष्णाजिनिः—स्त्रीहारी धनहारी च कुर्यात्पिण्डोदकक्रियामिति । यदि धनहारी न करोति तदा राज्ञा कारयितव्या । तदुक्तं मार्कण्डेयेन—

सर्वाभावे च नृपतिः कारयेत्तस्य रिक्थतः ।
तज्जातीयैर्नरैः सम्यग्दाहाद्याः सकलाः क्रियाः ।
सर्वेषामेव वर्णानां बान्धवो नृपतिर्यतः ।

अत्र रिक्थग्रहाधिकाराभावे यो धनहारी तस्य धनहारीत्यनेनाधिकारो बोध्यते, न तु पुत्रादिषु मध्ये एको धनहारी अपरो न तदा धनहार्येव कुर्यान्नान्य इति । अतएव—मार्कण्डेयपुराणे—

पुत्रो भ्राता च तत्पुत्रः पत्नी माता तथा पिता ।
पित्रभावेपि शिष्यश्च कुर्वीरन्नौर्ध्वदेहिकमिति ॥

अत्र पुत्रपदं द्वादशविधपुत्रपौत्रप्रपौत्रोपलक्षणम् । भ्रातृपदं सोदरासोदरोपलक्षणम् । एवं तत्पुत्रग्रहणमपि । पत्नीग्रहणं दौहित्रस्य पत्न्युत्तरं भ्रातुश्च पूर्वमधिकारस्य पूर्वमुक्तत्वात् ।

यथा व्रतस्थोपि सुतः पितुः कुर्यात् क्रियां नृप ।
एवं मातामहस्यापि दौहित्रः कर्त्तुमर्हति ॥

इतिपूर्वोक्तवाक्याच्च । एतदतिरिक्तेषु तु धनहार्यधनहारिणोर्मध्ये धनहार्येव कुर्यादित्युक्तं द्वैतनिर्णये पितामहचरणैः अन्यो विस्तरस्तु तत्रैव ज्ञेयः । अयनोपतिपर्यन्तेष्वधिकारिषु क्रियात्रैविध्येन व्यवस्थोक्ता । विष्णुपुराणे—

पूर्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ।
आद्याहाद् द्वादशाहात्तु मध्ये यास्तु क्रिया मताः ॥
पूर्वास्ता मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः ।
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ॥
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्तेता नृपोत्तराः ।
पितृमातृसपिण्डैस्तु समानसलिलैस्तथा ॥
तत्संघातगतैश्चैव राज्ञा वा धनहारिणा ।
पूर्वाः क्रिया मध्यमाश्च पुत्राद्यैरेव चोत्तराः ।
दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैस्तथेति ॥

अत्र राज्ञा धनहारिणा कारणीयेति व्याख्येयम् । तद्द्वारेति यावत् । न तु स्वयं कर्त्तव्येति ।

सर्वाभावे च नृपतिः कारयेत्तस्य रिक्थतः ।
तज्जातीयैर्नरैः सम्यग्दाहाद्याः सकलाः क्रिया ॥

इति मार्कण्डेयपुराणात् तज्जातीयैरित्युक्त्या न विजातीयैरिति गम्यते । सपिण्डीकरणं चिरकालादपि पुत्र एव कुर्यान्नान्यः । तदुक्तं- वायुपुराणे—

श्राद्धानि षोडाशादत्वा न तु कुर्यात्सपिण्डनम् ।
प्रोषितावसिते पुत्रः कालादपि चिरादपि ॥

इदञ्च वाक्यं-सपिण्डोकरणविषये विशेषविधित्वात्पुत्राभावे तु पत्नी स्यादित्यदिसामान्यविधेरपवादकम् ।

काश्यादिषु गयायां च प्रेतकार्यं तु यत्कृतम् ।
सपिण्डैरसपिण्डैर्वा पुत्रैरेव कृतं भवेत् ॥

इत्यादिवाक्यानि तु हेमाद्र्यादिभिरनादृतत्वादनाकाराणि । साकरत्वेपि वा तीर्थप्रशंसापराणि । तस्मात्पुत्रासन्निधाने तद्भिन्नेन कृतेऽनधिकारिणा कृतमकृतमेवेति पतितादिकृतमिव पुनः पुत्रैरावर्त्तनीयमेव । ज्येष्ठे सति कनिष्ठेन विना निमित्तं कृतं चेत्पुनर्ज्येष्ठेनावर्तनीयमेव । ज्येष्ठभ्रातृकर्तृकता च—

यवीयसा कृतं कर्म प्रेतशब्दं विहाय तु ।
तज्ज्यायसापि कर्त्तव्यं सपिण्डीकरणं पुनः ॥

इति ज्येष्ठस्यावृत्तिविधानादवगम्यते । अतएव मदनपारिजाते एकादशाहादि ज्येष्ठेनैव कर्त्तव्यमित्युक्त्वा एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रिया इति प्रचेतोवाक्यमुदाहृतम् ।

यदि कनिष्ठभ्रात्रादिना षोडशश्राद्धानि कृतानि तदा ज्येष्ठेन सपिण्डनमेव कर्त्तव्यमित्यपरार्के । ‘ श्राद्धानि षोडशापाद्य विदधीत सपिण्डताम् । श्राद्धानि षोडशादत्त्वा न तु कुर्यात्सपिण्डनमि’त्यादिवायुपुराणादिवाक्येषु समानकर्तृकत्व-श्रवणात् पूर्वोक्तमेव युक्तम् । एतदेकवाक्यतया प्रचेतोवाक्येऽपि एकादशाद्या इत्यनेन षोडशश्राद्धान्येव ग्राह्याणि न मैकोद्दिष्टादि । नच सपिण्डनस्य ज्येष्ठमात्राधिकारित्वेऽनधिकारिकनिष्ठकृत-सपिण्डनेन प्रेतत्वानिवृत्त्या कथं प्रेतशब्दत्यागेन ज्येष्ठस्य पुनरावृत्तिविधिरिति वाच्यम् । दशाहोत्तरं दर्शे आहिताग्नेः कनिष्ठस्य पिण्डपितृयज्ञानुरोधेनाधिकारात् । तथाच कात्यायनः—

एकादशाहं निर्वर्त्य पूर्वं दर्शाद्यथाविधि ।
प्रकुर्वीताग्निमान्विप्रो मातापित्रोः सपिण्डनमिति ॥
नासपिण्ड्याग्निमान्पुत्रः पितृयज्ञं समाचरेत्
न पार्वणं नाभ्युदयं कुर्वन्न लभते फलम् ॥

इतिप्रजापतिवचनाच्च । नचेमे वचसी ज्येष्ठविषये एव आर-ब्धपिण्डपितृयज्ञस्यानिर्वाहात्कनिष्ठेपि प्रवृत्तेरङ्गीकारादिति द्वैतनिर्णये पितामहचरणाः ।

ममत्वेवं प्रतिभाति “ पितुः पुत्रेण कर्त्तव्याः पिण्डदानो-दकक्रिया ” इत्यादिवाक्यैः पुत्रमात्रस्य सर्वक्रियास्वधिकारप्राप्तौ “एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रिया” इत्यनेनैकादशाहादि-क्रियासु कनिष्ठं प्रत्यपवादे जाते एतद्वाक्यद्वयं प्रतिप्रसवविधित्वेन लाघवात्कनिष्ठं प्रत्येव प्रवर्त्तते । ज्येष्ठं प्रति त्वपूर्वविधिः स्यादनुवादो

वा तदुभयं क्रमेण गौरववैयर्थ्याभ्यामनुचितमिति। एवं पुत्राभावे तु पत्नी स्यादिति सामान्यतो देशान्तरस्थित्या नाशाद्वाऽसन्निधिरूपेऽभावे पत्न्यादीनामधिकारः। "प्रोषितावसिते पुत्रःकालादपि चिरादपीति" सपिण्डीकरणविषयेण देशान्तरकृतासन्निधिविषयेण विधिनाऽपोदितोऽगत्या पुत्रनाश एवाधिकारो न देशान्तरस्थिते पुत्र इति अनधिकारात्तत्कृतमपि सपिण्डनं पुत्रेणावर्तनीयम्। एवं मासिकापकर्षोऽप्यावर्त्तनीयः। तत्रापि सपिण्डनाधिकृतऽस्यैवाधिकारात्। एवं कनिष्ठभ्रातृकृतमपि षोडशश्राद्धसहितमावर्त्तनीयं ज्येष्ठेन। यदि तु कनिष्ठेन पिण्डपितृयज्ञार्थं क्रियते तदा सपिण्डनमात्रमावर्त्तनीयं प्रेतशब्दं विना वचनात्। एकादशाहश्राद्धं तु येन केनापि कृतं नावर्त्तनीयम्। अभ्युदयार्थे तु कृते सपिण्डने ज्येष्ठेन पुनरावर्त्तनीयम्। एवं पुत्रातिरिक्तकृतमपि—अयातयामं मरणं न भवेत्पुनरस्य त्विति। सपिण्डीकरणस्य वृद्ध्युत्तरकरणे निन्दाश्रवणात्। "सपिण्डीकरणादर्वागपकृष्य कृतान्यपि। पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधानादि"ति शाटचायनिना षोडशश्राद्धनिषेधात्। निर्वर्त्य वृद्धिं तन्त्रं तु मासिकानि न तन्त्रयेदिति स्मृत्युक्तेश्च सकलशिष्टाचारोप्येवमिति पितामहचरणाः।

ननु पुत्राद्यैरेव चोत्तरेत्यादिशब्देन पौत्रप्रपौत्रयोर्ग्रहणात्पुत्रादीनां त्रयाणां दौहित्रैर्वेत्यनेन दौहित्रस्याप्यधिकारनियमात्कथं पत्नीभ्रातृतत्पुत्राणामुत्तरक्रियास्वधिकार इति चेत् वाक्यान्तरैरित्यवेहि। तथाहि—"अपुत्रा पुत्रवत्पत्नी पुत्रकर्मसमाचरेदि"त्यनेन पत्न्या अपुत्रेत्युक्त्या न पुत्रसन्निधाने प्रवृत्तिः। पितृव्यादीनां वार्षिकमेवाह—जातूकर्ण्यः—

पितृव्यभ्रातृपुत्राणां स्वपुत्राणां तथैव च ।
मातामहस्यापुत्रस्य श्राद्धादि पितृवद्भवेत् ॥ इति ॥

क्षयाहप्रकरणे चास्य पाठान्न दर्शादिप्राप्तिर्भवति । तेन चावश्यकनामात्रं बोध्यते इति हेमाद्रिः । दाक्षिणात्यास्तु पार्वणस्यातिदेशमिच्छन्ति । सोऽपि ज्येष्ठानां कनिष्ठानां "पितृव्यभ्रातृमातॄणां ज्येष्ठानां पार्वणं भवेत् । एकोद्दिष्टं कनिष्ठानां दम्पत्योः पार्वणं मिथ" इति जातूकर्ण्यवचनात् । इदञ्च द्वैतनिर्णये न लिखितं श्राद्धमयूखे तु लिखितम् ।

पितृव्यभ्रातृमातॄणामेकोद्दिष्टं न पार्वणम् ।
सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते ॥
भ्रात्रे भगिन्यै पुत्राय स्वामिने मातुलाय च ।
मित्राय गुरवे श्राद्धमेकोद्दिष्टं न पार्वणम् ॥

इत्यादीनि कात्यायनसुमन्त्वादिवचनानि तानि तीर्थमहालयादिश्राद्धविषयाणीति प्रयोगपारिजाते ।

यत्तु—

अपुत्रा ये मृताः केचित्स्त्रियो वा पुरुषाश्च ये ।
तेषामपि च देयं स्यादेकोद्दिष्टं न पार्वणम् ।
मित्रबन्धुसपिण्डेभ्यः स्त्रीकुमारेभ्य एव च ।
दद्याद्द्वैमासिकं श्राद्धं सांवत्सरमतोऽन्यथा ॥

इत्यापस्तम्बवाक्यम् । तद्धेमाद्रिणा वार्षिकप्रकरणे पाठाद्वार्षिकविषयमपि पितृव्यादिपदाभावात्तदतिरिक्तविषयं कनिष्ठपितृव्यादिविषयं वा पूर्वोक्तजातूकर्ण्यवाक्यात् । एतद्वाक्याभावेपि

वा द्वितीयजातूकर्ण्यवाक्येपि पितृवदित्यतिदेशेन पार्वणैकोद्दिष्टयोः प्राप्तयोर्देशाचाराद्व्यवस्था ज्ञेया । मातापित्रोरपि वार्षिकश्राद्धे विहितयोः पार्वणैकोद्दिष्टयोर्देशाचाराद्व्यवस्थेति सर्वग्रन्थसिद्धत्वात् ।

यत्तु द्वैतनिर्णये आशङ्क्य समाहितम् आपस्तम्बवाक्यं 'व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डते'ति वाक्यस्य पितृभ्रातृभर्तृव्यतिरिक्तभ्रातृपितृव्यादिविषयतायाः कालादर्शादावुक्तत्वात्तद्विषयं योज्यम् । अतो दाक्षिणात्यशिष्टानां भ्रात्रादिवार्षिकपार्वणानुष्ठानं शास्त्रविरुद्धमेव । तस्मादेवंसमाधेयम् । व्युत्क्रमादिति वाक्यमापस्तम्बवाक्यञ्च 'अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न तु' इति याज्ञवल्क्यस्मृत्या बाध्यते । यथा मधुपर्कादिषु गवालम्भ इति तदाशयं न जाने ।

इति श्रीमन्मीमांसकभट्टनीलकण्ठात्मजभट्टभानुकृतद्वैतनिर्णयसिद्धान्तसंग्रहे श्राद्धाधिकारिनिर्णयः ॥

॥ अथ मासिकापकर्षानपकर्षनिर्णयः ॥

न नित्यानित्यसंयोगविरोधादपकर्षणम् ।
मास्यानां जातकर्मादौ सोमाङ्गानां यथाफले ॥

तथाहि यदि राजन्यं वैश्यं वा याजयेत्स यदि सोमं विभक्षयिषेन्न्यग्रोधस्तिमिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोममिति राजन्यवैश्यनिमित्ते विहिते फलचमसे सोमाङ्गानां क्रयाभिषवादीनां यथा नित्यानित्यसंयोगविरोधाद्विधिर्न प्रवर्तते तथा—

प्रेतश्राद्धानि शिष्टानि सपिण्डीकरणं तथा ।
अपकृष्यापि कुर्वीत कर्त्ता नान्दीमुखं द्विजः ।

सपिण्डीकरणादर्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्त वृद्धयुत्तरनिषेधनत् ॥

इतिशाट्यायनिविध्यो 'निवर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेद्'ति कात्यायननिषेधस्य च सामान्यरूपत्वेऽपि गर्भाधानपुंसवनसीमन्तजातकर्मनामान्नप्राशनादिषु न प्रवृत्तिः किन्तु चौलोपनयनविवाहाधानेष्टपूर्त्तादिष्वेव निर्णयः। एवं सति दाक्षिणात्य-मूर्द्धन्यतमानामाचारोप्यनुगुणो भवति । यस्तु—क्वाचित्को जात-कर्मादिष्वपि मासिकाद्यपकर्षाचारः स जीर्णन्यायविरोधादुपेक्ष्य इति द्वैतनिर्णये पितामहचरणाः। नित्यस्य सोमधर्मस्य क्रियादेरनित्य-त्वेन फलचमसेन संयोगः सर्वथा विरुद्धः। नित्यक्रियादिभिर्ज्योतिष्टो-ममुपकुर्यादनित्यफलचमसद्वारेति वाक्यार्थोऽनुपपन्न इति यावत् । एवमत्रापि । तथाहि—कालादर्शदेवयाज्ञिकानिबन्धनिर्णया-मृतादौ मृताह एव मासिकापकर्षः कार्यो नान्यतिथावित्युक्तम्। तथा जातकर्मादिष्वधिकृतस्यैवापकर्षेधिकारो नान्यस्य। नच जननात्पूर्वं जातकर्माधिकारोस्ति येनापकर्षे स स्यात्। यदा तु जन्मोत्तरं जात-कर्मण्यधिकारस्तदा सूतकेन प्रतिबन्धात्तन्निवृत्तौ चैकादशेऽहनि नियमेन मृताहासंभवान्नित्यानित्यसंयोगविरोधः। जातकर्मणि नित्यमपकर्षः कर्त्तव्यः। स चानियममृताहप्राप्ताविति वाक्यार्थासंभव इति यावत्। एवं गर्भाधाने षोडशदिनावधि ऋतुकालेऽप्यनियम एव मृताहे। एवं नामकर्मणि षष्ठे मास्यन्नप्राशनमित्यादिमासाधिकृतेषु यद्यपि बहुधा मृताहसंभवस्तथापि यस्य मृताहो दर्शे शिशोस्तदुत्तरप्रतिपदि षष्ठमास-प्रवृत्तिस्तत्र मध्ये मृताहसंभवः। उत्तरदर्शे तु मासस्यैव समाप्तत्वान्न-

नियमेन मृताहसंभव इति पूर्वोक्तन्यायप्रवृत्तिरविहतेति न तत्रापकर्षः। यत्र तु तृतीये वर्षे चौलमित्यादिषु वर्षादि विहितं तत्र नियमेन मृताहसंभवात्तत्रैवापकर्ष इति सिद्धम्। एवं यान्यनियतकालानीष्टापूर्तादीनि तत्राप्यपकर्षः नियमेन मृताहसंभवात्। ननु वर्षाधिकारिकेष्युपनयनादौ अष्टमवर्षान्तिममासे मुहूर्त्तोद्धूर्वतश्च मासे कर्त्तुः पित्रादिर्मृतः तदा सपिण्डीकरणार्थमपकृष्य कृतानामपि मासिकानामुपनयने वृद्धिश्राद्धनिमित्तापकर्षे मृताहासंभवात्पूर्वोक्तन्यायप्रवृत्तिरिति चेन्न-एवंविधान्तिममुहूर्त्तावधारणस्य पुरुषापराधप्रभवत्वेन दशाहापकर्षकर्त्तव्यताविधिविधायकत्वाभावात्। अतस्तादृग्विषये नवमवर्ष एवोपनयनं कार्यमिति। तस्माच्चौलादिष्वेवापकर्षो न गर्भाधानादिषु। अत एव कालकाण्डहेमाद्रिकालादर्शप्रयोगपारिजातादिनिबन्धेषु गर्भाधानाद्युल्लङ्घ्य चोलाद्येवोपात्तमपकर्षविधिविषयप्रदर्शनावसरे। विस्तरस्तुद्वैतनिर्णये ज्ञेयः॥

इति भट्टभानुकृतो मासिकापकर्षनिर्णयः।

## अथ सपिण्डीकरणकालः।

**तथाच-महाभारते—**

सपिण्डीकरणं कुर्याद्यजमानस्त्वनग्निमान्।
अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ॥
द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासि वा।
एकादशे वापि मासि मङ्गलं स्यादुपस्थितम्।

एते सप्तकाला अनग्निमतोऽनग्निके कर्त्तरि-इच्छया विकल्प्यन्ते। हेमाद्रिस्तु-एकादशविषये षडेव कालानाह। तत्रापि

अब्दान्तेऽभ्युदयप्राप्तौ च कालद्वयं मुख्यमेकादशाहद्वादशाह त्रिषण्मासानुकल्पाः अनग्निमान् अग्निमतस्त्रिपक्ष एव कुर्यात् ।

अनग्निस्तु यदा वीर भवेत्कुर्यात्तदा गृही ।

प्रेतश्चेदग्निमान्स्तु स्यात् त्रिपक्षे वै सपिण्डनमिति ।

लघुहारीतोक्तेः । अत्राहिताग्निस्त्रिपक्ष एवेति नियमो नत्वितरस्यैव त्रिपक्ष इतिपूर्वोक्तभारतवचनविरोधात् । न तु पूर्वोक्तनियमे त्रिपक्षे कृतसपिण्डनस्य. नैव स्यात्सपिण्डनमिति चेन्न । नियमेन पूर्वभाव्येकदशाहद्वादशाहयोरेव निवृत्तिः । न तु तृतीयमासादीनामुत्तरभाविना 'स्वकालादुत्तरो गौणः कालः सर्वस्य कर्मण' इति मण्डनोक्तेस्तेषां गौणत्वोक्तेः । हेमाद्रिस्तु–पूर्णे संवत्सरे षण्मासे त्रिपक्षे वेति गोभिलवाक्ये पूर्णपदस्य षण्मासत्रिपक्षयोरप्यनुषङ्गाशयेन पक्षत्रये पूर्ण इति व्याचख्यौ । तन्नेति पितामहचरणाः अनुषङ्गं विनापि वाक्यपूर्तिसंभवादिति । पूर्णे संवत्सर इत्यत्र उत्तरेऽहनीति ज्ञेयम् । 'पितुः सपिण्डीकरणं वार्षिके मृतिवासर' इत्युशनोवाक्यात् । साग्निकस्तु कर्त्ता अनग्नेर्द्वादशाह एव कुर्यात्

यजमानोऽग्निमांस्तु स्यात्प्रेतश्चानग्निमान्भवेत् ।

द्वादशाहे तदा कार्यं सपिण्डीकरणं सुतैः ॥

इति भविष्यत्पुराणात् । अत्रापि द्वादशाहस्य मुख्यत्वं प्रतिपाद्यते । तेन त्रिपक्षादयो गौणा भवन्त्येव । अत्र साग्निकानग्निकपदानि–आहितानाहितपराणि । तथा च सुमन्तुः–

प्रेतश्चेदाहिताग्निः स्यात्कर्त्तानग्निर्यदा भवेत् ।

सपिण्डीकरणं तस्य कुर्यात्तत्तु तृतीयके इति ॥

कात्यायनः-

एकादशाहं निर्वर्त्य पूर्वं दर्शाद्यथाविधि ।
प्रकुर्वीताग्निमान्विप्रो मातापित्रोः सपिण्डनमिति ॥

अत्रैकादशाहानन्तरं दर्शात्पूर्वं यत्किञ्चिद्दिनं कालः ।

या तु पूर्वममावस्या मृताहाद्दशमी भवेत् ।
सपिण्डीकरणं तस्यां कुर्यादेव सुतोऽग्निमान् ।

इतिहारीतवाक्यम् । तस्य चेयं व्याख्या । मृताहाद्दशमी ( या रात्रिस्ततः ) परा याऽमावस्येति । एवञ्च साग्नेः पुत्रस्य पित्रोः सपिण्डने कालत्रयं--द्वादशाहः, दशाहात्परं यत्किञ्चिद्दिनं दर्शात्पूर्वं, दशाहात्परामावस्या, वेति हेमाद्रिः । मृताहादूर्ध्वदिनमारभ्य दशमी यामावास्येति व्याख्यानं कालादर्शमाधवयोः । एवञ्चैकादशाहदिनमित्येव फलितम् ।

सपिण्डीकरणात्प्रेते पैतृकं पदमास्थिते ।
आहिताग्नेः सिनीवाल्यां पिण्डयज्ञः प्रवर्तत ॥

इति गालव वाक्ये आहिताग्निपदादौपासनाग्निमतो न पिण्डयज्ञानुरोधेनैतेषु कालेषु सपिण्डीकरणं ( किन्तु ) दशाहान्तःपातिदर्शवल्लुप्यत एव पितृयज्ञ इति । यथानाहिताग्नेर्विहितो 'यदहर्वा वृद्धिरापद्यत' इति काल आहिताग्नेर्न प्रवर्तते एवमाहिताग्नेरेव द्वादशाहादिनियमादनाहिताग्नेर्न प्रवर्तत इति । आहिताग्न्याधिकारिकद्वादशाहादिनियमाबाधेनाप्युपपत्तौ पिण्डयज्ञस्यानाहिताग्निकर्तृकपिण्डयज्ञविधिना नियमबाधायोगात् । उभयोराहिताग्नित्वे तु द्वादशाह एव सपिण्डनम्--

साग्निकस्तु यदा कर्त्ता प्रेतश्चाप्यग्निमान् भवेत् ।
द्वादशाहे तथा कार्यं सपिण्डीकरणं पितुः ॥

इति स्मृतेरिति माधवाविज्ञानेश्वरौ । अत्र पितुरित्युक्त्या पितृभिन्नस्य साग्निकस्यापि कर्त्तुर्न द्वादशाहनियमः । हेमाद्रिकालादर्शयोस्त्वेतद्वाक्यालिखनात्तन्मते उभयोः पितृपुत्रयोः साग्नित्वेपि न द्वादशाहनियमः किन्त्वनियम एव । नचात्र पूर्वयोर्मते पितृग्रहणमविवक्षितम्, उभयोः साग्निकत्वस्याप्यविवक्षापत्तेः । नचैतदिष्टम् । तथा पूर्वयोरपि मते पुत्रग्रहणादेव साग्निकायाः पत्न्याः पुत्राभावात्पतिः करोति-तदापि न द्वादशाहनियमः । किंच यद्यपि पितृग्रहणमुपलक्षणं तदापि पूर्वोक्तद्वादशाहदर्शादिविधौ पिण्डपितृयज्ञासिद्ध्यर्थत्वस्य सर्वग्रन्थसंमतत्वात्तद्वाक्येषु साग्निकपदं विद्यमानाग्निपरं तेन विच्छिन्नाग्नेर्न पूर्वोक्तो नियमः । एवं विज्ञानेश्वरमाधवोक्तस्मृतावपि साग्निकपदं विद्यमानाग्निपरं तुल्यन्यायात् । एवं च साग्निकायाः पत्न्याः पतिकर्तृकसपिण्डने द्वादशाहविध्यप्रवृत्तेर्न द्वादशाहनियमः । न च पूर्वोक्तलघुहारीतवाक्येऽनग्निकर्तृके साग्नेः सपिण्डने त्रिपक्षविधानात् पूर्वविषये त्रिपक्षनियमः स्यात् ।

प्रेतश्चेदाहिताग्निः स्यात्कर्तानग्निर्यदा भवेत् ।
सपिण्डीकरणं तस्य कुर्यात्पक्षे तृतीयके ॥

इति सुमन्तुवाक्येऽनग्निपदेनानाहिताग्नेरेव ग्रहणात् (पूर्वार्द्धे आहिताग्निग्रहणात्) । एवञ्च—पत्युरनाहिताग्नित्वाभावान्न त्रिपक्षनियमः । पूर्वोक्तवाक्ये विद्यमानाग्नित्वानियमान्न द्वादशाहनियमः । किञ्च-द्वादशाहादिवत्साग्निकवाक्यानां क्वचिन्मातापित्रोः क्वचित्सुतैः पुत्रैः पितु-

रिति श्रवणात्साग्निकपदेन पुत्र एव च गृह्यते। एवं तत्प्रतियोग्यनग्नि-पदेन पुत्र एव गृह्यते उपस्थितत्वादिति पतिकर्तृकसपिण्डने नोभय-नियम इति सिद्धम्। एवं पत्न्यापि साग्नेः पत्युः सपिण्डने न नियमो द्वादशाहादीनामिति पितामहचरणाः । मम तु प्रतिभाति पिण्डपितृयज्ञार्थं साग्निकस्य कर्तुः साग्नेर्निरग्नेर्वा प्रेतस्य सपिण्डने द्वादशाहादिविधिषु पितृग्रहणं पितामहप्रपितामहयोरुपलक्षणम् । पुत्रग्रहणं च पौत्रप्रपौत्रयोः तद्देवताकपितृयज्ञानिर्वाहात् । यत्तु–निरग्नेः साग्निकप्रेतस्य द्वादशाहनियमस्तत्र न पितृग्रहणं न वा पुत्रग्रहणमुपलक्षणं प्रमाणाभावादिति ।

इतिसाग्नेः पुत्रपौत्रप्रपौत्राणां पित्रतिरिक्तसपिण्डननिर्णयः ।

## अथ कर्तृनिर्णयः ।

तत्र पुत्रः प्रवसन्नपि स एव कुर्यान्नान्यः–

श्राद्धानि षोडशादत्त्वा न तु कुर्यात् सपिण्डनम् ।
प्रोषितावसिते पुत्रः कालादपि चिरादपि ।

इति वायुपुराणात् । बहुषु तु ज्येष्ठ एव कुर्यात्–

एकादशाद्याः क्रमशो ज्येष्ठस्य विधिवत्क्रियाः ।
कुर्युर्नैकैकशः श्राद्धमाब्दिकं तु पृथक् पृथक् ॥

इति प्रचेतोवचनात् । अत्रान्त्यपादस्तु विभक्तभ्रातृविषयः । नचात्रैकादशाहेपि ज्येष्ठनियमः ।

आदाहाद् द्वादशाहाच्च मध्ये यास्तु क्रिया मताः ।
ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः ।
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः ।
पितृमातृसपिण्डैस्तु समानसलिलैस्तथा ।
तत्संघातगतैश्चैव राज्ञा वा धनहारिणा ।
पूर्वाः क्रिया मध्यमाश्च पुत्राद्यैरेव चोत्तरा ॥

इति विष्णुपुराणस्थपराशरवाक्ये दशाहोत्तरसपिण्डीकरणप्राग्भाविमध्यमक्रियासु पितृनृपत्यन्तानामधिकारप्रतिपादनात्। अत्राद्वादशाहादित्यस्य वैयर्थ्यान्मासिमासीत्यविवक्षितम्। नच वैपरीत्यं प्रथमोपस्थितत्वात्। तस्माज्ज्येष्ठस्यैव सपिण्डनेऽधिकारः। सपिण्डीकरणभिन्नोत्तरक्रियासु तु विभक्ते ज्येष्ठे सत्यपि कनिष्ठस्यापि पुत्राभावे तु 'पुत्राद्यैरव चोत्तरा' इत्यादिपदसंग्रहीतानां पौत्रप्रपौत्रपत्नीभ्रातृतत्पुत्राणां विष्णुपुराणवाक्योपात्तदौहित्रतत्पुत्रयोश्चाधिकारः। न तु नृपत्यन्तामन्येषामपि। ज्येष्ठकर्तृकसपिण्डनेऽनुमतिद्वारा विभक्तकनिष्ठानामपि फलं भवत्येव।

सर्वैरनुमतिं कृत्वा ज्येष्ठेनैव तु यत्कृतम् ।
द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत् ॥
इति मदनपारिजाते मरीचिवचनात् ।

कनीयसा कृतं कर्म प्रेतशब्दं विहाय तु ।
तज्ज्यायसापि कर्त्तव्यं सपिण्डीकरणं पुनः ॥

इति वाक्यमपि ज्येष्ठाधिकारिकतायां प्रमाणम्। नच प्रेतशब्दहानोक्त्या कनिष्ठस्याप्यधिकारः स्यादन्यथाऽनधिकारिकृतसपिण्डनेन प्रेतत्वनिवृत्त्यनुपपत्तिः स्यादिति वाच्यम् । ऋद्धिकामानां विभक्तभ्रातृकाणामपि पृथगधिकारोक्त्या ज्येष्ठासन्निधाने कनिष्ठकृतसपिण्डनेन प्रेतत्वनिवृत्तौ वचनाज्ज्येष्ठस्यावृत्तिः । एवमाहिताग्नेरपि कनिष्ठस्याधिकारः । स च ज्येष्ठासन्निधाने सूतकादिप्रतिबन्धे वा । एवं ज्येष्ठमात्रकर्तृकत्वे सपिण्डनस्य स्थिते क्वचिदपवादमाह—लघुहारीतः—

भ्राता वा भातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सह पिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः ॥

अत्राभ्युदयिकश्राद्धे येषां देवतात्वं तेषामेव पितृत्वसिध्द्यथ लघुहारीतोक्तेः। सपिण्डीकरणं कार्यं न तु यस्य कस्यापि सपिण्डस्य गृहे वृद्ध्युपस्थितौ यस्य कस्यापि सपिण्डस्य सपिण्डनं कार्यम्। पूर्वोक्तहारीत वाक्यं भ्रात्राद्यपत्यसंस्कारविषयत्वेनाप्युपपन्नम् ॥

स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु ।
पिण्डानोद्वहनात्तेषां तस्याभावे तु तत्क्रमात् ॥

इति कातीयेन भ्रात्राद्यपत्यसंस्कारे संस्कार्यपितृभ्य एव श्राद्धोक्तेः । यस्य कस्यापि सपिण्डस्य गृहे वृद्ध्युपस्थितौ येन केनापि सपिण्डने स्वपित्रादेः सपिण्डनं कर्त्तव्यमित्युच्यते दाक्षिणात्यैस्तदनुपपन्नमिति शूलपाणिमतमुपन्यस्य दूषितं द्वैतनिर्णये पितामहचरणैः। तथाहि—तस्याभावे तु तत्क्रमादिति कात्यायनवाक्यस्य द्वितीयव्याख्या एवं कृता। तस्याभावे पितुरभावे तत्क्रमाधिकारिक्रमात् पितैवोपनयेत्पुत्रमि-

त्यादि पिता पितामहो भ्रातेत्यादिश्च यः क्रम उक्तस्तेन क्रमेण स्वपितृभ्य एव दद्यान्न संस्कार्यपितृभ्य इति तदा भ्राता चेत्यादि वाक्ये चाभ्युदयिक श्राद्धे देवताभिन्नस्यापि सपिण्डस्य तत्कार्यमिति दाक्षिणात्याचारः सुस्थ एव। इदञ्च सपिण्डनं नाभ्युदयिके देवतात्वसिद्ध्यर्थं किन्तु कर्त्तुरधिकारसिद्ध्यर्थं समानकर्तृकत्वं तु कादाचित्कत्वेनाप्युपपद्यते। अत एवापरार्कउक्तं "श्राद्धानि षोडशादत्वा न तु कुर्यात्सपिण्डनमि" त्यत्र यदा कनिष्ठेन षोडश श्राद्धानि कृतानि तदा ज्येष्ठेन सपिण्डनमेव कार्यमिति। विस्तरस्तु-द्वैतनिर्णये ज्ञेयः। पितृचरणैस्तु पूर्वमतमेव श्राद्धमयूखे उक्तमिति संक्षेपः॥

इति श्रीमन्मीमांसक भट्टनीलकण्ठात्मजभट्टभानुकृतद्वैतसिद्धान्ते सपिण्डीकरणाधिकारनिर्णयः॥

## अथ प्रथमाब्दे पूर्वाधानानधिकारप्रतिपादनानिर्णयः॥

पितुरब्दमिहाशौचं षण्मासं मातुरेव हि।
मासत्रयं तु भार्यायास्तदर्द्धं भ्रातृपुत्रयोः॥
अन्येषान्तु सपिण्डानामाशौचं माससम्मितम्।
तथा च शान्तिकं कुर्यात्ततो लग्नं विधीयते॥

अत्र पूर्वं प्रतिकूलस्यैवोक्तेर्मरणमात्रहेतुकं प्रतिकूलत्वे वर्षाद्याशौचावधिव्यवस्थानर्थक्यं स्यात्। अत इदमाशौचं तत्तद्वर्षाद्यवधिकं यथा प्रतिकूलवैधव्यादिसूचकं यथाचागतौ सत्यां शान्तिकादिप्रयोजकं च तथान्यदपि यत्संगतिकं काम्यकर्माद्यनुष्ठानं पञ्चवर्षाद्युपनयनं च तत्राप्य-

धिकार प्रतिबन्धकम्। एवञ्चापूर्वाधानसोमाद्यपि पित्रादिमरणोत्तरं वर्षादिपर्यन्तं न कार्यम्। नच तत्र विवाहवच्छान्तिरुक्ता येन तां कृत्वाधिकारः स्यात्। अत्र कातीयाः—पित्रादिमरणोत्तरं वर्षादिमध्येपि निरग्निकानामाधानं सोमाद्याचरन्ति। तत्र प्रमाणोपन्यासं कुर्वन्ति। हेमाद्रावुशनाः—

पितुः सपिण्डीकरणं वार्षिके मृतिवासरे।
आधानाद्युपसंप्राप्तावेतत्प्रागपि वत्सरात्॥ इति।

अत्राधानाङ्गभूतनान्दीश्राद्धाधिकारसिद्ध्यर्थंसपिण्डीकरणम्। नान्दीश्राद्धस्य वा पूर्वाधान एवाङ्गत्वं न पुनराधाने। तस्मादपूर्वाधाने सोमादि च प्रथमाब्दे कर्त्तव्यमित्याहुः। तन्न। अस्य च वचनस्य नपूर्वाधाने प्रवृत्तिः। तस्य सगतिकत्वात्। किन्तु पुनराधाने तत्रापि पुनरुपनयनपुनर्विवाहयोरिव नान्दीश्राद्धं प्राप्तिसत्त्वात्। अत एव लौगाक्षिः "स्नानाधानविवाहेषु नान्दीश्राद्धं विधीयत" इत्यविशेषेणैव नान्दीश्राद्धस्याङ्गत्वमाह नापूर्वविधान एवेति। अस्य विषयान्तरं द्वैतनिर्णये ज्ञेयम्।

इति द्वैतनिर्णये पितृमरणप्रथमाब्दे पूर्वाधानानधिकार-प्रतिपादनपरिच्छेदः॥



## अथ पिण्डपितृयज्ञे प्राशननिर्णयः।

पिण्डपितृयज्ञे आश्वलायनसूत्रम्—"वीरं मे दत्त पितर इति पिण्डानां मध्यमं पत्नीं प्राशयेत् आधत्त पितरो गर्भं कुमारं पुष्कर-स्रजम् यथा आसदिति अग्निवतरावतिप्रणीते वा यस्य चागन्तुरलं-

काराभावः स प्राश्नीयात् महारोगाभितप्तो वा प्राश्नीयादन्यतरां गतिं गच्छतीति।" अस्यार्थो नारायणवृत्तौ वीरं स इति मन्त्रेण पति र्मध्यमं पिण्डमादाय तां पत्नीं प्राशयेत्। आधत्त इति मन्त्रं पत्नी ब्रूयात्। इतरावाप्सु प्रक्षिपेत्। अतिप्रणीते वा क्षिप्त्वा दीपयेत्। अथवा—यस्यागन्तुकरोगादिकं त्रिनैवान्नेच्छाभावो जायते स चैतरौ प्राश्नीयात् अथवा महारोगेण क्षयकुष्टादिना पीडितः स प्राश्नीयादिति अन्यतरां गतिं गच्छतीति स एवारोगी भवति म्रियते वेत्यर्थः। अन्यतरां गतिं गच्छेदित्यस्य न पूर्वेणान्वयः। प्राश्नीयादिति पुनर्वचनादिति वृत्तिकारः। अत्र पितामहचरणाः- अप्सु प्राशयेदिति णिजविवक्षया प्राश्नीयादिति स्त्रीकर्तृको व्यापारो विधीयते। अत एव यमः—

यथा च मध्यमं पिण्डं पत्नी प्राश्नाति वाग्यता।
पुत्रकामा सपुत्रां तां कुर्वन्ति प्रपितामहाः।

यत्तु-बृहस्पतिः—

पतिव्रता धर्मपत्नी पितृपूजनतत्परा।
मध्यमं तु ततः पिण्डमद्यात्पत्नी सुतार्थिनी॥
आयुष्मन्तं सुतं सूते यशोमेधासमन्वितम्।
धनवन्तं प्रजावन्तं धार्मिकं सात्विकं तथा॥

अत्र पत्नीकर्तृकादाने वीरं मे दत्त पितर इति मन्त्रोऽङ्गम्। न तु पतिकर्तृकभूमित आदाने। पत्नीकर्तृकादानं च भर्तृकरादेव न भूमेः। पतिकर्तृकपिण्डदानस्य विधानात्। तथाच—वाराहपुराणे।

जुहुते प्रथमं त्वग्नौ पत्न्यै देयं तु मध्यमम्।
तृतीयमुदके दद्याच्छेषमालेहयेत्स्वयम्।

आस्तम्बस्तु पतिकर्तृकदानेपि मन्त्रान्तरमङ्गत्वेनाह । अपामोषधीनां रसं प्राशयामि भूतकृतं गर्भमादधत्स्वेति मध्यमं पिण्डं पत्न्यै प्रयच्छति आधत्त पितरो यथेह पुरुष आसदिति तं पत्नी प्राश्नाति । अत्र तमिति तच्छब्देन दानसंस्कृतपिण्डस्य विनियोजनं पत्नीकर्तृकप्राशनाङ्गं पतिकर्तृकदानं न तु काम्यं प्रतिपत्तिर्वा । "पत्न्यै प्रजार्थं दद्याद्वै मध्यमं मन्त्रपूर्वकमिति" ब्रह्माण्डपुराणवचने फलश्रवणं तत्पत्न्याः पुत्ररूपप्रजार्थित्वस्योपलक्षणम् । यद्यपि पूर्वोक्तयमादिवाक्ये प्रतिपत्तित्वमुक्तं तस्यापि पत्नीकर्तृकप्राशनाङ्गत्वमेव । न पिण्डपितृयज्ञाङ्गत्वं पूर्वोक्ततच्छब्दश्रूयमाणप्रकरणबाधात् ।

अत्रेदमिदानीं विचार्यते । इदं प्राशनं क्रत्वर्थं पुरुषार्थं चेत्युभयार्थमुत पुरुषार्थमेवेति । अत्र हेमाद्रिरुभयार्थत्वमाह । तथाहि—आश्वलायनादिसूत्रे मध्यमं पत्नी प्राशयेदप्स्वितराविति प्रतिपत्तित्वावगमात् क्रत्वर्थत्वम् । "गृहीत्वा मध्यमं पिण्डं पत्नी प्राश्नाति वाग्यता । पुत्रकामा सपुत्रां तां कुर्वन्ति प्रपितामहा" इत्यादियमादिवाक्यैः पुरुषार्थावगमात् "एकस्य तूभयत्वे संयोगपृथक्त्वम्" (४।३।५)इतिन्यायादिति। पितामहचरणास्तु–केवलकाम्यत्वेन पुरुषार्थत्वमेवेत्याहुः।तथाहि शाखान्तराधिकरणन्यायादग्निहोत्रादिवत्प्रतिसूत्रमेकमेव कर्म पिण्डपितृयज्ञाख्यम् । तत्प्रकरणे पठितं प्राशनमपि तथा। अत्र सूत्रेणाकृतोपि फलसम्बन्धोऽर्थात्पिण्डान्नमस्कृत्य मध्यमं वीरं मे दत्त पितर इत्यादावाधत्त पितरो गर्भं कुमारं यथा आसदिति पुत्रकामां प्राशयेन्नैतदशुभश्राद्धे त्विदं कुर्यादिति गृह्यपरिशिष्टेन पूर्वोक्तयमममनुबृहस्पतिवचनैश्च पुत्ररूपफलसम्बन्धात्पुरुषार्थमेव प्राशनं

न क्रत्वर्थमपि। अत्र पिण्डानां मध्यमं पत्नीं प्राशयेदिति सूत्रेणोद्देश्य-विशेषसमर्पणात्तदाकाङ्क्षायां शाखान्तरस्थानीये मध्यमं पुत्रकामां पत्नीं प्राशयेदिति परिशिष्टेन पूर्वोक्तमनुगुरुयमादिवाक्यैश्च पुत्ररूपफल-विशेषे उद्देश्ये उपसंह्रियते। न च "शाखान्तरगतमपि यदङ्गं कर्मणः स्थितम्। तस्यान्यत्रापि तादर्थ्यं प्राप्तं केन निवार्यत" इति वार्तिकादङ्गा-नामेवोपसंहार इति वाच्यम्। अङ्गग्रहणमाकाङ्क्षितार्थान्तरोपलक्षणार्थ-मित्यस्य वार्तिक एवोक्तत्वात्। सा चान्यस्य विशेषाकाङ्क्षायामुपसंहारे बीजम्।

"सामान्यविधिरस्पष्टः संह्रियेत विशेषतः।
स्पष्टस्य तु विधेर्नान्यैरुपसंहारसंभव इति।
अवश्यमेव सामान्यं विशेषं प्रति गच्छति।
गतं चान्यं च तत्तेन विशेषे स्थाप्यते ध्रुवमिति वा।

नच प्रकरणात्पिण्डं प्राशयेदिति द्वितीया श्रुत्या च प्रतिपत्ति-त्वमेवेतिवाच्यम्। कर्मिश्रुतेः सर्वापेक्षया प्राबल्यस्योक्तत्वात्। अत एव नोभयार्थत्वम्। यत्र हि प्रमाणयोस्तुल्यत्वं तत्रैकस्य तूभयत्वे संयोगपृथक्त्वमिति न्यायः प्रवर्त्तते। यथा दध्ना जुहोति दध्नेन्द्रियकामस्य जुहुयादिति वाक्यद्वयेन दध्नः प्रकरणनिरासात्सन्निधिरपि निरस्तः। किं चैकस्य पिण्डस्य संस्कार्यत्वेन प्राशनं प्रति प्राधान्यं प्राशनस्य फलार्थत्वे तं प्रति गुणत्वं चेति वैरूप्यं च स्यात्। अत एव विज्ञानेश्वरेण—वैश्वदेवस्य द्रव्यसंस्कारार्थत्वेऽन्नार्थता पुरुषार्थत्वे वैश्वदेवार्थता द्रव्यस्येति

वैरूप्यात् पुरुषार्थत्वमेवोक्तं वैश्वदेवस्यान्योपि विस्तरो द्वैतनिर्णये ज्ञेय इति। प्रयोजनं तु विचारस्योभयार्थत्वेऽङ्गभूतमन्त्राद्युच्चारणाशक्तया पत्न्या प्राशनं कर्त्तव्यं पुरुषार्थत्वमात्रत्वे तु सत्यां कामनायां सर्वाङ्गोपसंहारशक्त्यैव प्राशनं कर्त्तव्यमिति। विस्तरस्तु तत्रैव ज्ञेय इति दिक्।

मदीयनिष्कर्षश्चात्र-- यथा-दर्शपूर्णमासप्रकरणपठितेन गोदोहनेन पशुकामस्य प्रणयेदित्यनेन दर्शपूर्णमासप्रयुक्तप्रणयनाश्रितं गोदोहनं पशुफलार्थं विधीयते। तथा पिण्डपितृयज्ञविधिप्रयुक्तपिण्डदानान्तर्गतमध्यमापिण्डमाश्रित्य पत्नीकर्तृकं प्राशनं पुत्रफलार्थत्वेन विधीयते। न तु प्राशनविधिप्रयुक्तं पिण्डदानान्तरं विधीयते। अत्र चाश्रयत्वमश्धातोः सकर्मकत्वात् कर्माकाङ्क्षायां कर्मत्वेनान्वय एवाश्रयत्वं नतु फलाय विधीयमानो गुणोऽयं क्रियामपेक्षते स आश्रय इत्येवंरूपम्। अत्र च सपुत्राया गतऋतुकालायाश्च नाधिकार इति दिक्।

द्वैतनिर्णयसिद्धान्तसंग्रहे पिण्डपितृयज्ञप्राशननिर्णयः।

## ॥ अथाग्नौकरणेऽग्निनिर्णयः ॥

अत्र विज्ञानेश्वरमते सर्वाधानिन आहिताग्नेर्दक्षिणाग्नावाग्नौकरणम्। अर्द्धाधानिनः केवलस्मार्ताग्निमतश्च स्मार्ताग्नावेव। तथा च मार्कण्डेयः---

आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहितः।
अनाहिताग्निस्त्वौपसदेऽग्न्यभावे द्विजेऽप्सु वेति॥

अत्र च कर्म स्मार्तं विवाहाग्नाविति सामान्यवाक्यमनेन बाध्यत इत्युक्तम् । एवमेवापरार्कस्मृतिचन्द्रिकाप्रयोगपारिजातादिषु ।

हिमाद्रिस्तु सर्वाधानपक्षवदर्धाधानपक्षेऽपि दक्षिणाग्नावेवाग्नौ करणमित्यूचे । अत्र हेमाद्रिमतमेव युक्तिसहम् । तथाहि—कर्म स्मार्तं-विवाहाग्नाविति वाक्यमर्द्धाधानिस्मार्ताग्निमतोः साधारणं द्वयोरपि स्मार्तसत्त्वात् । तथा हि—आहिताग्निस्तु जुहुयादिति सर्वाधान्यर्द्धाधानिनोर्द्वयोरसाधारणम् । तथा चोभयोः परस्परबाध्यबाधकभावे न किंचिद्विनिगमकमस्ति । तथापि—अनाहिताग्निस्त्वौपसद इति पूर्वोक्तमार्कण्डेयस्योत्तरार्द्धेन कर्मस्मार्तमिति स्वविषयोपसंहृतं सदर्द्धाधानिनं प्रति न प्रवर्त्तते । अतोऽर्द्धाधानिनापि 'आहिताग्निस्तु जुहुयाद्दक्षिणाग्नौ समाहित' इति वाक्याद् दक्षिणाग्नावेव होमः कार्य इति सिद्धम् ।

अत्र केचिद्विज्ञानेश्वरमतमेवमुपपादयति । अनाहिताग्निस्त्वौपसद इति यदि विधिः स्यात्तदा कर्मस्मार्त्तमित्यस्त्योपसंहारः । नचायं विधिः । किन्त्वाहिताग्नेर्मार्कण्डेयवाक्यपूर्वार्द्धेन दक्षिणाग्निविधानादनाहिताग्नेः स्मार्त्ताग्निमतोऽर्थप्राप्तः स्मार्ताग्निस्तस्यायमनुवाद इति ।

तन्न । उपसंहाराभावेपि न विज्ञानेश्वरमतिर्विनिगमकाभावात् । हेमाद्रेरप्ययं दोषः समान एवेति चेत्सत्यम् । तथापि कर्मस्मार्तमित्यस्याग्नौकरणानग्नौकरणविषयत्वेन सामान्यशास्त्रत्वम् आहिताग्निस्तु जुहुयादित्यस्याग्नौकरणमात्रविषयत्वेन विशेषशास्त्रत्वमतो बाध्यबाधकभावो युक्त एवेति सिद्धम् हेमाद्रिमतामिति ।

मम तु प्रतिभाति । अनाहिताग्निस्त्वौपसद इत्यत्राना-हिताग्निपदमाहिताग्निभिन्ने शक्तं न तु स्मार्ताग्निमति तेनार्द्धा-धानिनस्तत्पदेनाग्रहणान्न तस्य स्मार्ताग्नौ होमः । आहितग्निपदेन तु सर्वाधानिवदर्धाधानिनोपि शक्त्यैवोपस्थापितत्वाद् दक्षिणाग्निरेव तस्य प्राप्नोति अन्यथा पदद्वयेपि लक्षणा स्यात् सा चायुक्तेति दिक् ॥

इति भानुभट्टकृतद्वैतनिर्णयसंग्रहेऽग्नौकरणनिर्णयः ।

---

## अथ मातपित्रोः क्षयाहसन्निपाते निर्णयः ।

अत्र भृगुः—

एककाले गतासूनां बहूनामथवा द्वयोः ।
तन्त्रेणाश्रपणं कुर्यात्श्राद्धं कुर्यात्पृथक् पृथक् ॥
पूर्वकस्य मृतस्यादौ द्वितीयस्य ततः परम् ।
तृतीयस्य ह्ययं कुर्यात्सन्निपाते ह्ययं क्रमः ॥

एककाले एकतिथावित्यर्थः न त्वेकक्षणे । अत्र च कालादर्श-स्मृत्यर्थसारपराशरमाधवमदनपारिजातेषु मरणपौर्वापर्यज्ञानेऽज्ञाने वाऽविशेषेणादौ पितृश्राद्धं ततो मातुरित्युक्तम् । हेमाद्रौ तु मरण-पौर्वापर्यज्ञाने मरणक्रमेण, तदज्ञाने तु पितृपूर्वकत्वमिति । अत्र यद-नेनैतद्वचनमेवं व्याख्यातम् । पूर्वकस्य मुख्यस्यादौ द्वितीयस्य जघ-न्यस्य तृतीयस्य जघन्यतरस्येत्यर्थ इति । तथा च पितुः सर्वापेक्षया-मान्यत्वेन तस्य पूर्वं श्राद्धं ततो मातुस्ततः सपत्नीमात्रादीनामिति

फलितम् । इदञ्च मान्यत्वे न मुख्यत्वं पितर्येव किन्तु सर्वापेक्षया मातुर्मान्यत्वेन तस्यामेव । एवञ्च तस्या एव पूर्वं श्राद्धं स्यात् । तथा च मिताक्षरायां मनुगौतमौ—

उपाध्यायाद्दशाचार्यः आचार्याणां शतं पिता ।
उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता ॥
एते मान्या यथापूर्वमेभ्यो माता गरीयसीति ।

पूर्वकादिशब्देषु लक्षणा च स्यादित्येतन्मतमयुक्तम् । तस्मात्कालादर्शपराशरमाधवोदाहृतकार्ष्णाजिनवाक्येन निर्णयः । तत्र "पित्रोः श्राद्धे समे प्राप्ते नवे पर्युषितेपि वा । पितृपूर्वं सुतः कुर्यादन्यत्रासति योगत" इति । समे एकतिथौ । पर्युषिते–चिरन्तने । अत्र वाक्यद्वयं पादत्रयात्मकमेकम् । तुरीयपादात्मकं द्वितीयमिति । अत्र हेमाद्रिमतमेवम्–मातापित्रोर्युगपन्मृतौ आद्यात् कार्ष्णाजिनवाक्यान्निर्णयः । तदितरयुगपन्मृतौ द्वितीयवाक्येनासत्तियोगान्निर्णयः । यथा–मातृसपत्नीमात्रोरित्यादि पित्रोस्तदितरेषां च मरणपौर्वापर्ये तु भृगुवाक्यान्निर्णयः । तत्रापि पौर्वापर्यनिश्चये–तेनैव क्रमेण । तत्संदेहे तु पित्रादिपूर्वकमेवेति । कालादर्शादिमतेन प्रथमं कार्ष्णाजिनिवाक्यं पित्रोःक्रममृतौ युगपन्मृतौ च निर्णायकम् । तदितरेषामत्र युगपन्मृतौ चोत्तरवचनं निर्णायकमासत्तियोगत इति । भृगुवचनं तु मातापितृभिन्नतुल्यासत्तिमदनेकपितृव्यानेकसपपत्नानेकसपत्नमात्रादि विषये योजनीयमिति । अत्र पूर्वकस्य पूर्वस्येत्यर्थः । ज्येष्ठस्येति फलितोऽर्थः । द्वितीयस्य कनिष्ठस्य । तृतीयस्य कनिष्ठतरस्येति । एवं च तुल्यासत्तिविषये ज्येष्ठादिक्रमेणेतिफलितम् ।

अत्रोत्तरमतमेव सम्यक् एकभृगुवाक्यस्य संकोचात्। तथाहि-भृगुवाक्यं हि मातापितृभिन्नतुल्यासत्तिमदनेकपितृव्यादिविषये संकोच्यत इति लाघवम्। पूर्वमते तु कार्ष्णाजिनिवाक्यद्वयं युगपन्मृतिविषय एव संकोचनीयं संकोचोपि बाधविशेष एव। एकबाधेनोपपत्तौ नानेकबाधो युक्त इति दिक्। विस्तरस्तु द्वैतनिर्णये बोध्यः।

द्वैतनिर्णयसिद्धान्ते युगपत्त्रयाहप्राप्तौ निर्णयः॥



## अथान्वारोहणे निर्णयः।

अत्र पतिमरणतिथावेवान्वारूढायाः पत्न्याः श्राद्धं पतिश्राद्धं सह तन्त्रेण कर्त्तव्यम्। तत्र ब्राह्मणपिण्डानामप्यैक्यमिति हेमाद्र्यनुसारिणः। माधवादिमते तु ब्राह्मणपिण्डयोर्भेदो वैश्वदेवाद्यङ्गानां तन्त्रतो पितृमातामहयोर्दर्शश्राद्धवदिति। भिन्नतिथावन्वारूढायाः पृथगेव श्राद्धमिति निबन्धकाराः। पतितिथावेव वैश्वदेवाद्यङ्गानां तन्त्रता ब्राह्मणपिण्डयोरैक्यमिति श्राद्धद्वयं तन्त्रेणानुतिष्ठन्ति दाक्षिणात्याः शिष्टाः। तथा च चन्द्रिकायां-गार्ग्यः—

एकचित्यां समारूढौ दम्पती निधनं गतौ।
पृथक् श्राद्धं तयोः कुर्यादोदनं च पृथक् पृथक्॥

भृगुरपि—

या समारोहणं कुर्याद्भर्तृचित्यां पतिव्रता।
तां मृताहनि सम्प्राप्ते पृथक्पिण्डे नियोजयेत्।
प्रत्यब्दं च नवं श्राद्धं युगपत्तु समाचरेदिति॥

अत्र पूर्ववाक्ये ब्राह्मणभोजनरूपप्रधानस्य श्राद्धशब्देनोपादानमोदनशब्देन च पिण्डदानस्य तथैव हेमाद्र्यादिभिर्व्याख्यानात् । अतस्तयोरेव पृथगनुष्ठानं वैश्वदेवाद्यङ्गानां तु तन्त्रेणोत्तरवाक्ये पिण्डशब्दो ब्राह्मणभोजनस्याप्युपलक्षकः । आभ्यां च शब्दाभ्यां तिथिभेदे तदभेदे च तन्त्रता विधीयते । सा चाङ्गानामेव । प्रधानपृथक्त्वविधानात् ।

यत्तु—

मृताहनि समासेन पिण्डनिर्वपणं पृथक् ।
नवश्राद्धं तु दम्पत्योरन्वारोहण एव तु ॥

इति लौगाक्षिवाक्ये मृताहनीत्यस्य मृततिथेरेकत्वमिति व्याख्यानं कृतं कैश्चित् । तन्नैकतिथावन्वारोहणवद्देशकालकर्त्रैक्यन्यायेनैव समासप्राप्तेरेतद्वचनमनर्थकं स्यादतो भिन्नतिथावेव सार्थकोऽयं समास इति दूषणान्तराणि द्वैतनिर्णये एव द्रष्टव्यानि ।

अत्र पिण्डपदं श्राद्धोपलक्षकं तेन मृताहश्राद्धं समासेन नवश्राद्धं तु पृथगित्यर्थः फलितः । ननु पतिमरणतिथावेव समासो न पत्नीमरणतिथावेव किं नियामकमिति चेत् । भर्तृमरणोत्तरं चिरकालेनान्वारूढाया अपि पत्न्या भर्तृमरणसमकालमेव मरणप्रतिपादकान्यर्थवादवाक्यानि रत्नावल्यादिषु दर्शितानि श्राद्धमयूखे च । तथाच संदिग्धेषु वाक्यशेषादिति न्यायाऽवतरणम् । यथाक्ताः शर्करा उपदधाति तेजो वै घृतमित्यनेन घृताक्तत्वं लभ्यते । एवमत्रापि वाक्यशेषात्पतिमरणतिथावेव पत्नीमरणावधारणात् तत्रैव पत्नीमरणात्तत्रैव समासविधानमिति । एवञ्चानेन वाक्येन साङ्गे समासप्राप्तौ पूर्वोक्तभृगुगार्ग्यवाक्याभ्यां ब्राह्मणभोजनपिण्डयोः पृथक्त्वं विधीयते । अतोऽङ्गेष्वसमास इति

फलितम्। अत्रापदि तु ब्राह्मणपिण्डयोरपि तन्त्रतारूपः समासो भवति। तथा चात्रिस्मृतिः—

एकचित्यां समारुह्य मृतयोरेकबर्हिषि।
पित्रोः पिण्डान् पृथग् दद्यात् पिण्डं वापत्सु तत्सुतः॥ इति।

अत्र पिण्डपदं श्राद्धोपलक्षकं श्राद्धप्रकरणात्। एवं भृगुवाक्येन च श्राद्धं युगपदित्युक्तम्। पूर्वोक्तलौगाक्षिवाक्ये पृथगित्युक्तम् अनयोरप्यापदनापद्विषयत्वेन व्यवस्था ज्ञेयेति। इदं च समासविधानं मासिकाब्दिकोभयविषयं पूर्वोक्तभृगुवाक्ये 'तां मृताहनि सम्प्राप्ते पृथक्पिण्डे नियोजयेत्। प्रत्यब्दं च ...'इत्यस्य पृथगुपादानान्मृताहनीत्यस्य मासिकविषयत्वम्। एवञ्चास्योभयविषयत्वसिद्धावापद्ये तदपवादकस्याप्युभयविषयत्वं सिद्ध्यति। अपवाद्यापवादकयोः समानविषयत्वनियमात्।

हेमाद्र्यनुसारिणस्तु—समासविधानमाब्दिकमात्रविषयमित्याहुः। तन्मतनिराकरणं द्वैतनिर्णये बोध्यम्। मतान्तरनिराकरणमपीति। अन्वष्टक्यादौ यत्र मातुः श्राद्धं पृथगुक्तं तत्राङ्गानां तन्त्रतान्यायेनैव भवतीति दिक्।

इदं च समासविधानमपुत्राया सपत्नमातुरप्यन्वारूढाया भवति पित्रोरित्यनुक्त्वा दम्पत्योरित्युक्तत्वात्। सपुत्रायास्तु न कुर्यात्—

पितृव्यभ्रातृमातॄणामपुत्राणां तथैव च।
मातामहस्यापुत्रस्य श्राद्धादि पितृवच्चरेत्।

इति जातूकर्ण्येनापुत्राया एव श्राद्धविधानात्। पितृवदित्यावश्यकत्वार्थमिति हेमाद्रिः। आवश्यकत्ववत्पार्वणधर्मातिदेशोपीति दाक्षि-

णात्याः तथैव शिष्टाचारात्। एवञ्च (अविभक्तेन(१) सपत्नमात्रोर्मध्ये-ज्येष्ठेन)स्वमात्रा सह पितृश्राद्धं समासेन कर्त्तव्यम्। कनिष्ठेन तु मातृश्राद्धं पृथगेव कार्यम्। यदि तु विभक्तस्तदा स्वमात्रा सह सोपि समासेन कुर्यात्। इदमत्र वैषम्यं दुष्परिहरमेवेति केचित्। तथाहि। यदा ज्येष्ठेनैं सपत्नभ्रात्राऽविभक्तस्वमाता च पतिमरणतिथिभिन्नतिथावन्वारूढा तदा पितृश्राद्धे कर्तृत्वाभावात् कनिष्ठेन स्वमातुः पृथगेव तन्मरणतिथौ श्राद्धं कार्यम्। विभक्तेन तु पितृमरणतिथावेवेति-दोषो दुष्परिहर एवेति केचित्।

इदं च वैषम्यं न दोषायेति तु मम प्रतिभाति। यदा भिन्नतिथि मृतयोरविभक्तस्य पितृश्राद्धं कदाचिन्महालयादावेकाहोरात्रे तिथिद्वयमपराह्णव्यापि भवति तदा देशकालकर्त्रैक्यन्यायात्तन्त्रेण श्राद्धद्वयं भवति। तथेहापि विभक्तस्य पितृश्राद्धे पृथक्कर्तृत्वप्राप्त्या समासशास्त्रं तं प्रति प्रवृत्तं तेन पूर्वोक्तरीत्या पतिमरणतिथावेव तन्त्रेणानुष्ठानं शास्त्रसिद्धं न दोषावहमिति दिक्।

इति श्रीमन्मीमांसक नीलकण्ठात्मज भट्टभानुकृते द्वैतनिर्णयसंग्रहेऽन्वारोहणश्राद्धनिर्णयः।

---

### अथ मातामहश्राद्धं प्रौष्ठपद्यां कार्यं नवेति सन्देहः।

तत्र कार्यमिति केचित्। तथा हि "पितरो यत्र पूज्यन्ते तत्र मातामहा अपीति" धौम्यवाक्ये पितृशब्दः सपिण्डीकरणजन्यपितृभावपरो न जनकपरो बहुवचनानुपपत्तेः। अतस्तादृशपितृत्वं नान्दीमुखसंज्ञकचतुर्थपञ्चमषष्ठेष्वप्यस्तीति तत्र मातामहप्राप्त्या तदनुष्ठानं

(१) क० पु० ( ) एतन्मध्यस्थस्थाने 'अविभक्तस्तदा' इति पाठः।

कार्यमेवेति । तदयुक्तम् । धौम्यवाक्ये यदि पितृशब्दः सपिण्डीकरणजन्यपितृभावपरः स्यात्तदा "कर्षूसमन्वितं मुक्त्वा तथाद्यं श्राद्ध षोडशम् । प्रत्याब्दिकं च शेषेषु पिण्डाःस्युःषडिति स्थितिः" इति कात्यायनवाक्ये षोडशश्राद्धादिषु तादृशपितृत्वाभावान्मातामहानां प्राप्त्यभावेन पर्युदासानुपपत्तिः स्यात् कर्षूसमन्वितं सपिण्डीकरणं तत्र कर्षूसंज्ञकगर्तविधानात् । किंच महालयान्वष्टकायां जीवत्पितृकस्य मातृश्राद्धं विहितं तत्रापि मातामहप्राप्तिः स्यात्तत्र मातरि तादृशपितृत्वस्य सत्वात् । तस्माद्धौम्यवचने पितृशब्दो जनकपरोप्यजहत्स्वार्थलक्षणया पित्रादित्रयपरः । तेन बहुवचनमप्युपपन्नम् । तच्चाविवक्षितमनुवाद्यगतत्वादेकोद्दिष्टषोडशश्राद्धेषु मातामहप्राप्तिपूर्वकः पर्युदास उपपन्नः । तस्मात्प्रोष्ठपदीश्राद्धे मातामहश्राद्धं नानुष्ठेयम् । एवं च सकलशिष्टाचारोप्यनुगुणो भवतीति दिक् । अमावास्यादिषु पित्रादीनां प्रत्येकं देवतात्वं न समुच्चितमित्यादि द्वैतनिर्णये ज्ञेयम् । अत्र नान्दीमुखानां सपत्नीकानां देवतात्वं केवलानां वेति विचारणीयम् ।

इति श्रीमन्मीमांसक भट्टनीलकण्ठात्मज भानुभट्टकृते
प्रोष्ठपदीश्राद्धे मातामहानुष्ठानपरिच्छेदः ।

---

## अथ नान्दीश्राद्धनिर्णयः ।

अत्र कालादर्शे लौगाक्षिः—

नामान्नचौलगोदानसीमन्तोन्नयपुंसवे ।
अग्न्याधानविवाहेषु नान्दीश्राद्धं विधीयते ॥
अग्न्याधानाभिषेकादाविष्टापूर्ते स्त्रिया ऋतौ ।
वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथा इति ॥

विवाहे पुत्रजनने पित्रिष्ट्यां सौमिके मखे।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः ॥

इति मैत्रायणीयपरिशिष्टेन षट्स्वेव जीवत्पितृकस्याधिकारोक्तेराधानमहाकोटिहोमादिनववेश्मप्रवेशारामोत्सर्गादितुलापुरुषादिषु दर्शपूर्णमासादिषु नान्दीश्राद्धं न भवतीति केचित्।

अत्रोच्यते–मैत्रायणीये षडिति न परिसंख्यायकं किन्तूपलक्षणमात्रं जीवत्पितृकाधिकारिश्राद्धानाम्, तानि मैत्रायणीयपरिशिष्ट एव–

अन्वष्टक्यां गयाप्राप्तौ सत्यां यच्च मृतेहनि।
मातुः श्राद्धं सुतः कुर्यात्पितर्यपि च जीवति ॥ इति।

षडित्यनेनान्यत्राधिकारनिषेधे ऽत्राधिकारो न स्यात्। आधानादौ तु प्रधानेऽधिकारात्तदङ्गेष्वधिकारः सिद्ध्यत्येवान्यथाऽऽधानस्य नित्यकाम्यत्वादङ्गहोमे फलं न स्यात्। तच्चाग्रे वक्ष्यते। तुलापुरुषादीनां तु काम्यत्वमेव। किंच—

वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति।
येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुत ॥ इति।

संन्यस्तपतितपितृकं प्रति देवताविधानमनुपपन्नं स्यात् श्राद्धस्यैवाप्राप्तेः। भवन्मते कथं तत्राधिकार इति चेदित्थम्। देवताविधिबलात्तद्विधिकल्पनात्। अथवा सर्वेपि श्राद्धविधयो जीवत्पितृका जीवत्पितृकसाधारण्येन प्रवृत्ताः। तत्र जीवत्पितृकस्य देवताभावात्प्रतिबद्धाः देवतान्तरविधौ तु पुनः प्रवर्त्तन्ते। अत एव "सपितुः पितृकृत्येषु नाधिकारः कथंचन" इति कात्यायनावचनम्,

दर्शश्राद्धं गयाश्राद्धं श्राद्धं चापरपक्षिकम्।
न जीवत्पितृकः कुर्यात्तिलैः कृष्णैश्च तर्पणम् ॥

इति मैत्रायणीयवचनपरिशिष्टवचनं चोपपन्नम्। साधारणश्राद्धविधीनां तं प्रत्यप्रवृत्तौ तु निषेधानुपपत्तिः स्यादिति। तस्मात्षडिति जीवत्पितृकाधिकारिकश्राद्धोपलक्षणमेवेति सिद्धम्। अत्र गयानिषेधस्तदुद्देशेन गत्वा श्राद्धं न कर्त्तव्यमिति। 'गयां प्रसङ्गतो गत्वा मातुः श्राद्धं समाचरेदिति' स्मृत्यन्तरात्। तस्मादाधानाद्यङ्गभूतवृद्धिश्राद्धेपि जीवत्पितृकस्याधिकार इति सिद्धम्। अत एव—

निषेककाले सोमे च सीमन्तोन्नयने तथा।
ज्ञेयं पुंसवने श्राद्धं कर्माङ्गं वृद्धिवत्कृतम् ॥

इति पारस्करवाक्यव्याख्याने सोमग्रहणमाधानाग्निहोत्राद्युपलक्षणमित्युक्तं हेमाद्रिणेति दिक्। विस्तरस्तु द्वैतनिर्णये बोद्धव्यः।

इति वृद्धिश्राद्धे जीवत्पितृकाधिकारपरिच्छेदः।



## अथ विच्छिन्नहस्तादेराधानाधिकारनिर्णयः।

दर्शेष्टिं पौर्णमासेष्टिं सोमेज्यामग्निसंग्रहम्।
अग्निहोत्रं विवाहं च प्रयोगे प्रथमे स्थितम् ॥
न कुर्याज्जनके ज्येष्ठे सोदरे चाप्यकुर्वति।
क्षेत्रजादावनीजाने विद्यमानेपि सोदरे।
नाधिकारविघातोस्ति भिन्नौदर्येपि चौरसे।

पङ्ग्वन्धमूकबधिरपतितोन्मादददूषणे ।
संन्यस्ते च्छिन्नहस्तादौ यद्वा षण्ढादिदूषणे ।
जनके सोदरे ज्येष्ठे कुर्यादेवेतरः क्रियाम् ।
तयोस्त्वनधिकारित्वान्नैतस्याधिक्रियाक्षतिः ॥

इति त्रिकाण्डमण्डनोक्तेः विकलाङ्गज्येष्ठभ्रातृकस्य तादृशजीवत्पितृकस्याविकलाङ्गादेराधानादिकरणेपि न कोपि दोषः । अप्रतिसमधेयाङ्गस्य भ्रात्रादेरनधिकारान्न कनिष्ठस्याधिकारप्रतिबन्ध इति ।

अत्र प्रयोगे प्रथमे स्थितमिति दर्शेष्ट्यादिसम्बन्धासंभवादानन्तर्याच्च विवाहेनैवान्वेतीति पितामहचरणाः । तेषामाशयमजानतो ममेष्ट्यादिभिरपि यथासंभवमन्वयः प्रतिभाति । शास्त्रदीपिकायां षष्ठाध्याये यस्य त्वप्रतिसमाधेयमङ्गादिवैकल्यं स काम्ये नाधिक्रियते । नित्ये तु कृताधानश्चेद्यथाशक्ति कुर्वन्नधिक्रियत एवेत्युक्तम् । अत्र कृताधानश्चेदिति विशेषणादाधानात्पूर्वमङ्गवैकल्ये आधानेऽनधिकार इति गम्यते । अप्रतिसमाधेयाङ्गविकलोप्याहिताग्निरधिक्रियते । आधानं तु न कुर्यात्तस्यानैमित्तिकत्वादिति तन्त्ररत्ने षष्ठाध्यायतृतीयपादाद्यधिकरणे आधानं भवतीति स्पष्टमेवोक्तम् । तस्माद्धस्तद्वयसाध्यारणिग्रहणं च्छिन्नहस्तस्य न संभवतीति तेनाधानं न कर्त्तव्यम् । एवं च चक्षुरादिसाध्येपि तद्वन्नाधिकारः । अत एव प्रामाणिकपद्धतिकाराणां हस्ताभ्यां संगृह्येति लेखः संगच्छते । नन्वनाहिताग्निता पण्यविक्रयः परिवेदनमित्यादि स्मृतिष्वनाहिताग्निताया उपपातकेषु पाठादवश्यानुष्ठेयत्वाद्विकलाङ्गस्याप्यनुष्ठानं स्यादिति चेदुच्यते । यत्र

ह्युत्पत्तिवाक्यं भिन्नं काम्यत्वबोधकं भिन्नं नित्यताबोधकं च भिन्नं तत्र काम्यनित्यप्रयोगयोर्भेदः काम्यनित्यप्रयोगेण वा नित्यस्य प्रसङ्गसिद्धिः। यथाग्निहोत्रं जुहोतीत्यनेनोत्पन्नस्याग्निहोत्रस्य यावज्जीववाक्येन नित्यत्वम्, अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यनेन काम्यत्वम्। इह तु वसन्ते ब्राह्मणोऽग्नीनादधीतेत्याधानोत्पत्तिवाक्यम्। तत्रैवाग्नीनादधीतेतिद्वितीयाश्रुत्या भाव्यत्वावगमात्काम्यत्वं यादृशमुत्पन्नं तादृशस्यैवोपपातके पाठेन नित्यत्वमपि कल्प्यत इति। नित्यकाम्यप्रयोगयोर्न भेद इति यथाऽत्रैवाकृताधाने सोदरे ज्येष्ठे विद्यमाने कनिष्ठस्य प्रत्यवायः तथात्रापीति। तस्मादप्रतिसमाधेयाङ्गविकलस्याधानेऽधिकाराभावात् तादृशाग्रजे सोदरे सत्यसत्यपि कनिष्ठस्याविकलाङ्गस्याधिकार इति तेन चाधाने कृते न तस्य परिवेत्तृत्वं न तु ज्येष्ठस्य परिवित्तित्वमिति दिक्।

द्वैतनिर्णयसिद्धान्तसंग्रहे आधानाद्यधिकारनिर्णयः॥

## अथापत्नीकाधाननिर्णयः

आहिताग्नेः पूर्वं पत्नी चेन्मृता तामाहिताग्निरग्निभिर्दहति यज्ञपात्रैश्चेत्यादिवचनादग्निभिर्दग्ध्वाऽपत्नीकोऽप्याधानं कुर्यात्। तदुक्तं भारद्वाजसूत्रे–'तयोर्यः पूर्वं म्रियते तस्य त्रेतायां पितृमेधः संपद्यते' इत्युपक्रम्य यद्ययं कर्मण्यशक्त आत्मार्थमग्न्याधेयं कुर्यात्। अत्र दारकर्मासंभवे आत्मार्थात्मदाहार्थमेतत्संभवे तु पत्नीसाहित्येनोत्पन्नमुभयार्थं न केवलमात्मार्थम्। अत आत्मार्थमित्यनेन विधुराधानमुच्यते। अत्राग्नेयाधेयमपूर्वाधानं पुनराधेयशब्दाभावादन-

योश्च भेदो दर्शितः श्रीरामांडारभाष्ये। अग्नीनां सम्भारेषु विधानेन स्थापनमग्न्याधेयम्, पुनर्विधानान्तरेण स्थापनं पुनर्विधानं तस्यैव गुणविकार इति। अत्र पक्षद्वयं पत्न्या अपि प्राधान्यं तस्या अग्निसिद्धकामनाभावे त्वङ्गत्वमिति । आद्ये पूर्वं मृताया अग्निभिर्दाहं कृत्वाऽपूर्वाधानं कुशादिपत्न्या सहितस्तद्रहितो वा कुर्यात्। द्वितीये तु पूर्वमृतां निर्मन्थ्येन दग्ध्वा उत्सर्गेष्ट्या तानग्नींस्त्यक्त्वा पुनराधानं कुर्यान्नापूर्वाधानम्। **त्रिकाण्डमण्डनः**—

पुनः परिणीयाधाने स्वामिनौ यदि सिद्ध्यतः।
पत्न्यै मृतायै श्रौताग्निं दद्यान्निर्मन्थ्यमन्यथा।
तथैवानेकभार्यस्य यद्येकात्र प्रमीयते।

अनेकभार्यस्यापि द्वयोरपि प्राधान्ये ज्येष्ठा चेत्पूर्वं मृता तदा सर्वाग्निभिस्तां दग्ध्वा कनिष्ठया पुनराधेयं कुर्यात्। कनिष्ठा चेत्पूर्वं मृता तस्यै अर्द्धाग्नीन्दत्वाऽर्द्धाग्निषु नित्यहोमादि कुर्यात्। द्वयोरन्यतरस्याप्राधान्ये तु निर्मन्थ्येन दाहो न पुनराधानम् । द्वयोः पूर्वमरणेऽग्निभिर्दाहः। कुशपत्न्या सहाधानमिदं च प्राधान्ये । अङ्गत्वे निर्मन्थ्येन दाह उत्सर्गेष्टिः पुनराधानं च। अत्र मतान्तरविरोधोद्भावनं तत्परिहारश्च द्वैतनिर्णये धर्मप्रकाशे च ज्ञेय इति । कुशादिमयी पत्नी चोक्ता **कर्मप्रदीपे छन्दोगपरिशिष्टे**—

मृतायामपि भार्यायां वैदिकाग्निं न हि त्यजेत्।
उपाधिनापि तत्कर्म यावज्जीवं समापयेत्।

उपाधिना कुशादिपत्न्येति व्याख्यातम् । अत्र यावज्जीवं समापयेदित्युक्त्या नित्य एवाधिकार इति न भ्रमितव्यम् ।

रामोपि कृत्वा सौवर्णी सीतां पत्नीं यशस्विनीम् ।
ईजे यज्ञैर्बहुविधैः सह भ्रातृभिरर्चितः ॥

इति ग्रन्थान्तरोक्तेः । अत्राग्निहोत्रादिवदौपासनादिकमपि भवति । तथा च भरद्वाजः—"यद्ययमपत्नीकः स्यादुभाभ्यां तस्य संस्कार औपासनाग्निहोत्राभ्यामि"ति । अत्रापत्नीकोप्यग्निहोत्रमाचरे-दित्यैतरेयब्राह्मणभाष्ये । यदुक्तं पूर्वं मृताया अपि निर्मन्थ्येन दाह उत्सर्गेष्टिः पुनराधेयेति तदङ्गत्वपक्षे ज्ञेयमिति दिक् ।

इति श्रीमन्मीमांसकभट्टनीलकण्ठात्मज भट्टभानुकृते
विधुराधानाधिकारनिर्णयः ।

## ॥ अथ नित्यहोमविधिः ॥

तत्र होमकालमाह-आश्वलायनः-

सम्यङ्निम्लोचति रवौ सायं च जुहुयात्सदा ।
अथ प्रातर्हुनेन्नित्यमुदितेऽर्के यथाविधि ।
विप्रः स्मार्त्ताग्निरेकाग्नावग्निमानग्निषु त्रिषु ।
हुनेदाहवनीये चेत् क्रमैश्च जुहुयुर्द्विजाः ।

अत्र विशेषः कर्मप्रदीपे कात्यायनः—

यावत्सम्यङ्न भासन्ते नभस्यृक्षाणि सर्वतः ।
लोहितत्वं च नापैति तावत्सायं तु हूयते ।

उदितेऽर्के विशेषमाह मनुः—

रेखामात्रस्तु दृश्येत रश्मिभिस्तु समन्वितः ।
उदितं तद्विजानीयात्तत्र होमं प्रकल्पयेत् इति ॥

अयं पूर्वावधिरुत्तरावधिश्चन्द्रिकायां कात्यायनः—

हस्तादूर्ध्वं रविर्यावद्गिरिं भित्वा न गच्छति ।
तावद्धोमविधिः पुण्यो नान्यो ऽभ्युदितहोमिना ॥

एवं च हस्तपर्यन्तं यावद्रविर्गच्छति तावत्प्रातः, यावद्रक्तिमापैति तावत्सायं, होमकालो मुख्यस्तदूर्ध्वं त्रिमूहूर्त्तं यावद् गौणः त्रिमुहूर्तं तदतिक्रमे प्रायश्चित्तमाश्वलायनसूत्रे—प्रदोषान्ते होमकालःसंगवान्तस्तमतिनीय चतुर्गृहीतमाज्यं जुहुयात् । अत्र संगवान्त इत्यत्र बहुव्रीहिः प्रदोषान्त इत्यत्र तत्पुरुष इत्यर्थः। स्पष्टीकृतं चाश्वलायनेन—

पश्चादस्तमयात्कालो यो भवेत्त्रिमुहूर्त्तकः ।
स सायं होमकालश्च प्रदोषान्त उदाहृतः ॥
यश्च षाण्नाडिकः कालः पश्चादेवोदयाद्रवेः ।
स होमकालो विप्राणां संगवान्त उदाहृतः ॥

अत्र विशेषो गृह्यपरिशिष्टे—नित्यहोमकालमतीत्य मनस्वत्या जुहुयादाद्वादशरात्रादूर्ध्वं पुनराधानं कुर्यादिति । "प्रायश्चित्तोत्तरमतीतहोमः कार्य" इति प्रयोगपारिजाते । यत्तु "आसायं कर्मणः प्रातः प्रातरासायकर्मणः । आहुतिर्नातिपद्येत पार्वणं पार्वणान्तरादि" तिबौधायनवचनं तच्छाखान्तरविषयमिति पारिजाते । सुदर्शनभाष्ये तु रात्रौ नवनाडीमध्ये विवाहहोमसमाप्तौ तन्मध्ये नित्यहोमः कार्यः नवनाडीनामतिक्रमे तु परेद्युः सायं सायं होमारम्भ इति । तदयुक्तम् । 'लोहितत्वं च नापैति तावत्सायं तु हूयत' इति कात्यायनवचनोक्तमुख्यकालेग्निसिद्ध्यभावेनाधिकाराभावान्न गौणकाले होमारम्भ इति पूर्णिमोत्तरद्वितीयादौ नच-

त्राधाने दर्शपूर्णमासारम्भो न भवति मुख्यकाले ऽनधिकारात् । एव-मौपासनारम्भोऽपि न भवति पुनराधाने तु भवति गौणकालेऽप्या-रम्भ इति श्रीरामांडारादयः । आधानप्रभृतियजमान एवाग्नेय इति श्रुतेर्युक्तं पुनराधानेपि गौणकाल आरम्भ इति पितामहचरणाः । वस्तुतस्तु एतस्याः श्रुतेरर्थवादत्वेन पुनराधानेपि नारम्भो गौणकाल इति द्वैतनिर्णये त एव । तदुपपादनं तत्रैव ज्ञेयम् । यदपि रात्रौ सुत्यासमाप्तौ 'अथ सायमग्निहोत्रं जुहोति .काले प्रातर्होममिति' सूत्र निर्देशाद् गौणकालेऽग्निहोत्रारम्भ इति अत्र श्रीरामण्डारभाष्ये पक्षद्वयं कृतम् । एतदनन्तरं "संतिष्ठतेऽग्निष्टोम" इति सूत्रान्तरात् होमा-न्तरमेवेदमग्निष्टोमाङ्गमिति नित्याग्निहोत्रमेवेदमिति पक्षान्तरमुक्त्वा ऽस्मिन्पक्षेऽस्य वचनस्य वैयर्थ्यात्तद्बलाद् गौणकालेऽप्यारम्भः तद्दूषण-मपि भाष्ये एव ज्ञेयम् । तस्मात्परेद्युः सायमेवारम्भः कार्य इति दिक् । अत्रैव त्रिमुहूर्त्तकालस्य मुख्यत्वमिति न भ्रमितव्यम् । यावत्सम्यङ्न भासन्ते इत्यादि कात्यायनादिवचनात्पूर्वकालस्य मुख्यत्वं त्रिमुहूर्त्तस्य तु गौणत्वं 'स्वकालादुत्तरो गौणःकाल' इति मण्डनोक्ते । अत एव श्रीमन्नारायणभट्टैः प्रयोगरत्ने स्पष्टमुक्तम् । मुख्यकालातिक्रमे व्याहृतिहोम आज्येन त्रिमुहूर्त्तात्मकगौणकालातिक्रमे तु मनोज्योति रिति मन्त्रेण चतुर्गृहीताज्यहोम इति ॥

इति द्वैतनिर्णयसिद्धान्तसंग्रहे होमकालनिर्णयः ।

---

## अथ दत्तकपुत्रग्रहणविचारः ।

तत्र प्रयोगपारिजाते दत्तकविधौ शौनकवाक्यं "दौहित्रो भा-गिनेयश्च शूद्रस्यापि च दीयत' इति । अत्र शूद्रस्यैवेमौ नान्येषामिति

नियमं केचिदाहुः। तन्न। अपिशब्देनान्येषामपि तत्प्रतीतेः। तस्माद्ब्राह्मणादेरपि तौ भवतः। अत्र वैश्यानां वैश्यजातेषु शूद्राणां शूद्रजातिष्वि"ति शौनकोक्तेः "सजातीयेष्वयं प्रोक्तस्तनयेषु यथाविधि" इति मनूक्तेश्च सजातीय एव भवति न विजातीयः। तत्रापि भ्रातुः पुत्रपौत्रादिश्चेत्स एव। तदभावे दौहित्रभागिनेयौ। तदभावे अन्यसगोत्रसपिण्डः। तदभावे सपिण्डोऽसगोत्रश्चेति। अत्र सर्वत्र सन्निकृष्टग्रहणसन्निकर्षो नियामकः। एतदुपपादनं धर्मप्रकाशे द्वैतनिर्णये च ज्ञेयम्। एकपुत्रेण पुत्रो न देयः "नैकं दद्यादि" ति निषेधात्। ज्येष्ठोपि न देयः इति केचित्। अत्र दानेधिकारो मातापित्रोः—

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्रिमः सुत॥

इति मनुवाक्यात्। तयोरभावे भ्रात्रादेरपि। सधवाया मातुरधिकारो भर्त्राज्ञया। विधवायास्तु देवराज्ञया। तादृशसन्निकृष्टाभावे जात्यनुज्ञया तस्याप्यभावे स्वातन्त्र्येण। अत्र पुत्र एव दत्तको न कन्येति व्यवहारमयूखे पितृचरणाः। एतदुपपादनं तत्रैव द्रष्टव्यमिति दिक्। दत्तकस्तु परिणीत उत्पन्नपुत्रो भवतीति पितामहचरणाः।

यत्तु-कालिपुराणे—

पितुर्गोत्रेण यः पुत्रः संस्कृतः पृथिवीपते।
आचूडान्तं न पुत्रः स पुत्रतां याति चान्यदा।
चूडोपनयसंस्कारा निजगोत्रेण वै कृताः।

दत्ताद्यास्तनयास्ते स्युरन्यथा दास उच्यते ।

तदपि पञ्चमवर्षावधिकमेव तदुत्तरमनधिकारश्रवणात् । तथाहि—

ऊर्ध्वं तु पञ्चमाद्वर्षान्न दत्ताद्याः सुता नृप ।

गृहीत्वा पञ्चवर्षीयं पुत्रेष्टिं प्रथमं चरेत् ॥

धर्मप्रकाशे स्मृतिवचनात् ।

इति श्रीमन्मीमांसकभट्ट नीलकण्ठात्मज भट्टभानुकृते
द्वैतनिर्णय-संग्रहे दत्तपुत्रकविधिनिर्णयः ।

---

## अथ तीर्थयात्रानिर्णयः ।

तत्र जगद्गुरुभट्ट श्रीनारायणभट्टत्रिस्थलीसेतौ प्रभासखण्डे ।

गत्वा पुण्यानि तीर्थानि पुण्यान्यायतनानि च ।

लभते सुमहत्पुण्यं स्वर्गे चैव महीयते ॥

यश्चान्यं कारयेच्छक्त्या तीर्थयात्रां तथेश्वरः ।

स्वकीयद्रव्ययानाभ्यां तस्य पुण्यं चतुर्गुणमिति ।

अत्र पूर्ववचनेन साक्षाद्यात्राकर्त्तुरेव फलमुक्तम् । द्वितीयवचनेन कारयेदिति णिजन्तेन प्रयोजककर्त्तुश्चतुर्गुणं फलं प्रतिपाद्यते । तत्र द्वितीयवाक्येन स्वतो यात्रार्थं प्रवृत्ताय यात्रार्थमिदं द्रव्यं संप्रदद इत्यनुक्त्वैवेश्वरार्पणबुद्ध्या द्रव्यदाने चतुर्गुणं फलं भवतीति प्रतिपाद्यते। तद् द्रव्येण यात्राकर्त्तुस्तु सुमहत्पुण्यमेवेत्यविवादम् । प्रतिनिधिद्वारा यात्रायां तु कारयितुः सम्पूर्णफलप्रतिपादनादेतद्वचसस्तत्रावृत्तेः । भृतिकर्त्तुस्तु "षोडशांशं तु लभते यः परार्थेन गच्छती"ति पैठीनसिवचनात् षोडशांशमेव फलमिति केचित् । तन्नेति पितामहचरणा द्वैतनिर्णये । यत्रामनुद्दिश्यैव

द्रव्यदाने प्रतिग्रहीत्रा कदाचिदकृतायामपि यात्रायां तस्य फलं चतुर्गुणं स्यात्। तच्चानिष्टमेव सर्वत्रापि तथा प्रसङ्गात् । स्वकीयद्रव्ययानाभ्यामित्युक्त्या द्रव्यदानविध्यप्रतीतेश्च। तस्मान्न पूर्वोक्तविषये चतुर्गुणं फलं किन्तु स्वप्रतिनिधिद्वारैव । यत्र स्वत्वापरित्यागेनैव मदीयान्येवैतानि वाहनद्रव्यसेवकवस्त्रादिवस्तूनि गृहीत्वा मदीया यात्रा कर्त्तव्या यदधिकमपि द्रव्यं व्ययोभविष्यति तदपि मया देयं यथेच्छं त्वया व्ययः कर्त्तव्य इत्यादि प्रकारेण सहकुटुम्बविप्रद्वारा यात्रां कारयितुश्चतुर्गुणं फलमनेन वचनेन प्रतिपाद्यते । द्रव्ययानपदे भृत्यादीनामुपलक्षके प्रतिनिधिद्वारा यात्रायां सम्पूर्णमेव फलं भृतिकर्त्तुः षोडशांशं फलमत्रापि न विवाद इति ।

मम त्वेवं प्रतिभाति । यदि स्वयं यात्रामारभ्य गच्छतोऽन्येपि प्रारब्धयात्रा ब्रह्मणाः प्रसङ्गमिलितास्तन्मध्ये यस्य कस्यचिद्विप्रस्य शरीरापाटवेन द्रव्याद्यभावेन च यात्राविघ्नं ज्ञात्वा स्वयमेव यदि स्वद्रव्य यानादिदानेन तदीययात्रां निर्विघ्नतया कारयति स्वयं चाशक्तोपि यानान्तराभावेन पद्भ्यामेव गच्छति तदीयकुटुम्बस्य च निर्वाहं करोति तदा तस्य चतुर्गुणं फलमनेन प्रतिपाद्यत इति । एवं च सति प्रतिनिधिद्वारा यात्राकर्त्तुः सम्पूर्णफलप्रतिपादकवाक्यानामपि न बाधो भवति । प्रतिनिधिश्च नित्ययात्रायां प्रारब्धकाम्ययात्रायां च भवति नत्वनारब्धकाम्ययात्रायां काम्ये कर्मणि वचनमन्तरेण न प्रतिनिध्युपादानं भवति तस्य तत्र प्रतिषेधात् । ननु प्रतिनिधिद्वारा यात्राकरणेऽन्यैर्वचनैस्सम्पूर्णं फलमित्युक्तम् अनेन चतुर्गुणमुच्यते इति परस्परविरोध इति चेन्न पूर्वोक्तविशिष्टविषयकत्वमस्य

वचनस्य साधारणयात्राविषयत्वं सामान्यवाक्यस्येति न कोपि-विरोध इति ।

'तीर्थमर्द्धफलं तस्य यः प्रसङ्गेन गच्छति ।
यानमर्द्धं चतुर्थांशं छत्रोपानहमेव च ।
द्विर्भोजनं तृतीयांशं हरेत्तीर्थफलस्य च ।
वाणिज्यं त्रीन् यथा भागान्सर्वं हन्ति प्रतिग्रह इति ।

तथा-

यस्य हस्तौ च पादौ च मनश्चैव तु संयते ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥

इत्यादिवचनानि तद्व्यवस्था चेत्यादि सर्वं त्रिस्थलीसेतौ सामान्यप्रघट्टके ज्ञेयमिति ।

अत्र पक्षत्रयमेकस्तावदप्रवृत्तमेव. शिष्यादिकं प्रार्थनया द्रव्यादिदानेन वा प्रतिनिधीकृत्य यात्रार्थं प्रेषयति । अस्मिन्पक्षे-प्रतिनिधिना यजमानस्यामुकतीर्थयात्राफलप्राप्त्यर्थं यात्रां करिष्य इति संकल्पः कार्यः । तत्पित्राद्युद्देशेनैव घृतश्राद्धं कार्यम् । तीर्थे तु यजमानपित्राद्युद्देशेन श्राद्धादि कृत्वा स्वपित्राद्युद्देशेनापि श्राद्धादि कुर्यात् । तथाच-वायुपुराणे-स्वधनदानेन प्रेतप्रेरितं वणिजं गयागतं प्रक्रम्य—

आदौ गत्वा गयाशीर्षे प्रेतराजस्य पिण्डकम् ।
समदाद् बन्धुभिः सार्द्धं स्वपितृभ्यस्ततो ददाविति ।

'अत्र षोडशांशं फलं तस्य यः परार्थेन गच्छतीति, पूर्वोक्तवचनात्प्रतिनिधेः षेडशांशं फलं यजमानस्य पञ्चदश इति

केचित्कल्पयन्ति । यानमर्द्धफलं हन्तीत्यादावप्यर्द्धफलकल्पना वाहकादीनां स्यात्तस्मादेतदयुक्तमिति पितामहचरणाः । अपरोपि विशेषः । यदा प्रतिनिधिर्यानादिना यात्रां करोति तदा द्वयोरपि फलं न्यूनमुभयोर्यानमर्द्धफलं हन्तीत्यादिवचनप्रवृत्त्यविशेषात् । एवं च वाणिज्यादिष्वपीति । एतेन यजमानस्यैव फलं श्रुतमिति केषांचिदुक्तिः परास्ता । एतत्प्रतिपादनविस्तरो द्वैतनिर्णये ज्ञेयः ।

द्वितीयपक्षस्तु स्वार्थयात्रायां प्रवृत्तस्यैव यात्राकर्त्तुः स्वीयद्रव्ययानादिना यात्रासम्पादनम् । अस्मिन्पक्षे यश्चान्यं कारयेदिति वचनप्रतिपादितचतुर्गुणफलोद्देशेनास्यारब्धयात्रस्य यात्रां द्रव्ययानादिना संपादयिष्य इति संकल्पः । विप्रस्य तु स्वफलोद्देशेन यात्रां करिष्य इति । अत्र यानादिप्रयुक्तफलन्यूनता यात्राकर्त्तुरेव न सम्पादयितुः फलार्थविहितपूर्वोक्तयुक्त्यास्य संपादनव्यापारस्य वैगुण्यादिति बोध्यम् । प्रतिनिधिपक्षे तु द्वयोरपि यात्रैव फलसाधनमतस्तद्वैगुण्याद् द्वयोरपि फलवैगुण्यमिति विशेषः । अस्मिन् पक्षे यात्राकर्त्रा स्वपित्राद्युद्देशेन श्राद्धादि कार्यं नेतरपित्राद्युद्देशेन ।

तृतीयस्तु पक्षः स्वार्थप्रवृत्तविवाहकर्त्रे द्रव्यदानवद्यात्राकर्त्रे द्रव्यं देयमिति । अत्र यात्रार्थं द्रव्यमिदं तुभ्यं संप्रददे इति संकल्पः । श्राद्धादि यात्राकर्त्रा स्वपित्राद्युद्देशेनैव कार्यं यानादिप्रयुक्तफलतारतम्यमपि तस्यैव । यात्रार्थद्रव्यदानरूपव्यापारस्यावैगुण्यात् न द्रव्यदातुरिति । एतावत्परं यदि तेन यात्रा न क्रियते तदा एतस्य फलाहानिर्न तु प्रत्यवायः किंचिददृष्टं भवति न वेति तु विचारान्तरम् । यात्राकर्त्तुस्तु प्रत्यवायो भवत्येवेति । यश्चान्यं कारयेदिति-

वाक्ये अण्यन्तावस्थायां कर्तुर्ण्यन्तावस्थायां कर्मसंज्ञा विधीयते। गतिबुद्धीत्यादिसूत्रेणात्र च क्रियासिद्धौ यः स्वतन्त्रस्तस्य कर्मसंज्ञा स्वतन्त्रः कर्तेत्यनुशासनात्। सा चात्र न भवति । अन्यप्रयोज्यकर्तुः स्वातन्त्र्याभावात् । एवञ्चान्यमिति द्वितीयानुपपन्नेत्याशङ्का तत्समाधानं च द्वैतनिर्णये ज्ञेयमिति विस्तरभयान्नेहोक्तमिति दिक्।

इति द्वैतनिर्णयसिद्धान्तसंग्रहे तीर्थयात्रानिर्णयः।

---

## अथौपदेशिकसापिण्ड्यनिर्णयः।

अत्र बहुषु स्मृतिषु असपिण्डां यवीयसीमिति कन्याविशेषणं श्रूयते "एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वर" इत्यनेन यवीयस्त्वव्यतिरिक्तगुणा वरेऽप्यतिदिश्यन्ते। तथा च वरनिरूपितं कन्यायां कन्यानिरूपितं वरे पृथगेव सापिण्ड्यं न तूभयनिरूपितमेकमेव येनैकतो निवृत्तमन्यतोऽपि निवर्तेत तथा सति उभयत्र विशेषणं व्यर्थं स्यात् एवं सति विशिष्टतमदाक्षिणात्यानामेकतो निवृत्तं सापिण्ड्यं नान्यत इति व्यवहारोऽप्यनुगुणो भवति । नचात्र नञ्समासेन पर्युदासप्रतीतेः। पर्युदस्तानुष्ठाने दोषो न स्यात् "यथोपवासवता कार्यं सायं सन्ध्याऽऽहुती विना" इत्यत्रोपवासवता सायंसंध्याहुत्योरनुष्ठाने न दोष इति वाच्यम्। सपिण्डोद्वाहे प्रायश्चित्तस्योक्तत्वादयं निषेधफलकः पर्युदासो ज्ञेयः। सापिण्ड्यं चैकावयवानुवृत्तिलक्षणकमित्यादिसर्वं मिताक्षराधर्मप्रकाशसंस्कारमयूखादिषु ज्ञेयम्। अत्र प्रयोगपारिजातादिग्रन्थेषु पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथेति सर्वसंमतम्। मातृतः पञ्चमादूर्ध्वं पितृतः सप्तमादूर्ध्वं सापिण्ड्यनिवृत्तिरुक्ता।

वध्वा वरस्य वा तातः कूटस्थाद्यदि सप्तमः ।
पञ्चमी चेत्तयोर्माता सापिण्ड्यं विनिवर्त्तते ॥

इत्यभिसम्मतिरपि चोक्ता । तथान्येऽपि विधयो लिखिताः षट्त्रिंशन्मते—

तृतीया मातृतः कन्या तृतीया पितृतस्तथा ।
विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः ॥

चतुर्विंशतिमते "तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि" उत्तरार्द्धं पूर्ववत् । पैठीनसिः "त्रीनतीत्य मातृतः पञ्च चातीत्य पितृत" इति । चतुर्थीमुद्वहेत्कन्यां पञ्चमो न तु पञ्चमीं पराशरमते षष्ठोमित्यभ्यनुज्ञा विधयस्तान् दृष्ट्वा तथैवानभिज्ञाः केचिदनुतिष्ठन्ति । तन्न । शिष्टसम्मतं नापि न्यायसिद्धम् । तथाहि पञ्चमात्सप्तमादितिवाक्ये मातृतः पञ्चमादूर्ध्वमुद्वाह्या एवं पितृतः सप्तमादूर्ध्वमुद्वाह्यैवेत्युद्वाहो विधीयते इति चेन्न—तस्या अनुद्वाहे दोषप्रसङ्गात् । तस्मात्सप्तमादूर्ध्वमेव पितृत उद्वहेत्पञ्चमादूर्ध्वमेव मातृत इति नियमो वाच्यः । तथा चासपिण्डामित्यनेन सहैकवाक्यतया सपिण्डा नोद्वाह्येत्यत्र तात्पर्यं फलितम् । असपिण्डामिति पर्युदासस्य निषेधफलकत्वमित्यस्य पूर्वमुक्तत्वात् एवं पैठिनसिवाक्येपि तृतोयपञ्चमपर्यन्तं निषेधः । एवं चतुर्विंशतिमतवाक्येपि चतुर्थयोरुद्वाहे न तात्पर्यम् किंतु द्वितीयानुद्वाह एव । एवंच सर्वेप्येते निषेधा एव । न च सप्तमपञ्चमनिषेधेनैषां वैयर्थ्यमिति वाच्यम् । दोषाधिक्यकल्पनेनैषां सार्थक्यात् । यथा-"नन्दासु नाभ्यङ्गमुपाचरेत क्षौरं च रिक्तासु जयासु मांसम्"इत्यादि-

सामान्यनिषेधे षष्ठ्यादौ निषेधे सिद्धे षष्ठ्याः फलमनायुष्यमिति । "पञ्चदश्यां चतुर्दश्यामष्टम्यां च विशारद । तैलं मांसं व्यवायं च क्षौरं च परिवर्जयेदि" त्यादिविशेषनिषेधो दोषाधिक्यकल्पनया सार्थक इत्युक्तम् । हेमाद्रिणा तु–अभ्यनुज्ञाविध्यङ्गीकारे दोषाल्पत्वं बहुत्वं च कल्प्यमेव । किंच तृतीयाचतुर्थीपञ्चमीषष्ठीनामुद्वाहे एतैर्वाक्यै-र्विहिते पञ्चानां सप्तानां च निषेधो व्यर्थ एव स्यात् । सप्तम्या अपि क्वचिद्विवाहविधानात् द्वितीयायामेवायं निषेधः पर्यवस्यति । स च व्यर्थ एव । एतैरेव वाक्यैस्तन्निषेधसिद्धेः । एतेन माधवाचार्योक्तमेतेषामनुकल्पत्वमपास्तम् । यद्यप्ययमनुकल्पस्तथापि न ब्राह्मादिविवाहचतुष्टये किन्त्वासुरादिविवाह एव तत्र सापिण्ड्यनिवृत्ते-र्वोक्तत्वात् । तैर्मातुलकन्याविवाहप्रतिपादनावसरे तेन च कन्यासंताने सापिण्ड्याभावादविवाहस्य सिद्धत्वादिति । दानात्सापिण्ड्यनिवृत्तिरप्य-युक्ता । प्रमाणाभावात् । तदुपपादनं द्वैतनिर्णये द्रष्टव्यम् । दौहित्रा-दीनां विवाह्यतापतेः । पञ्चमात्सप्तमादूर्ध्वमित्यादिवाक्यादीनां वैयर्थ्या-पत्तेश्च । नचासुरादिविवाहः । मिताक्षरादिसर्वग्रन्थविरोधात् । तत्र हि पञ्चमात्सप्तमादित्याद्युक्त्वा पंचमीं सप्तमीं चैव मातृतः पितृतस्त-थेत्याद्यर्वाक्निषेधार्थं न पुनर्विवाहप्राप्त्यर्थमित्युक्तम् । कन्यास-न्ताने सापिण्ड्याद्दशाहाशौचप्राप्तौ "संस्थिते पक्षिणीं रात्रिं दौहित्रे भगिनी सुते । संस्कृते तु त्रिरात्रं स्यादिति धर्मो व्यवस्थित" इत्यादिविधयो-ऽपवादाः इत्युक्तं संगच्छत इति दिक् ।

इत्यौपदेशिकसापिण्ड्यनिर्णयः ।

---

## अथातिदेशिकं सापिण्ड्यं निरूप्यते ।

"पितृपत्न्यः सर्वा मातरस्तद्भ्रातरो मातुलास्तद्भगिन्यो मातृष्वसारः तद्दुहितरश्च भगिन्यस्तदपत्यानि भागिनेयानि अन्यथा संकरिणः स्युरिति" सुमन्तुवाक्योपात्तैः सपत्नमातुर्भ्रातृभगिनी भगिन्याश्च दुहिता । तस्याश्च—यान्यपत्यानि एतैरेव सह यस्य सपत्नमाता तस्य सापिण्ड्यं प्रतिपाद्यते । यावद्वचनं वाचनिकमितिन्यायादिति प्रयोगरत्ने प्रपितामहचरणाः । द्वैतनिर्णये पितामहचरणास्तु सुमन्तु-वाक्योपात्ततद्भ्रातृतद्भगिनीतद्दौहितृतदपत्यानीतिपदैः सपत्नमाता-महमारभ्य चतुःपुरुषपर्यन्तं तत्कुलं लक्षयित्वा तदुद्देशेन मातुलमा-तृष्वसृभगिनी भागिनेयपदैः लक्षितं चतुःपुरुषसापिण्ड्यं विधीयते । अन्यथोद्देश्यविधेयानेकत्वकृतो वाक्यभेदो दुष्परिहरः स्यात् । नच लक्ष-णा दोष इति वाच्यम् । अर्द्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि इत्यत्र जात-पुत्रः कृष्णकेशोऽग्नीनादधीतेत्यत्र च वाक्यभेदपरिहारार्थं सर्वमीमांसा-ग्रन्थेषु लक्षणास्वीकारात् । एवं च सति तद्दुहितर इत्यत्र दुहित्रा सह सापिण्ड्यं तत्पुत्रेण सह सापिण्ड्यं नेति विरोधपरिहारोपि भवति । इदञ्च सापिण्ड्यं विवाहप्रतिबन्धकं न सूतकाद्यापादकमिति सर्वग्रन्थसम्मतम् । विवाहप्रकरण एव पाठादित्याहुरिति । एवं च यस्य सपत्नमाता तस्य तत्सपत्नमातामहकुले चतुःपुरुषं सापिण्ड्यं सिद्धम् । अत्र कन्यायाः सापिण्ड्याभावेपि पूर्वोक्ते चतुःपुरुषपर्यन्तं विवाहो न भवति । तथा च मनुः—"असपिण्डा च या मातुरसगोत्रा च या पितुः । सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने" इति । एतदर्थको मदनपारि-जातग्रन्थोपि सपत्नमातृपितृकुलजा स्वासपिण्डा मातृसगोत्रापि भवति ।

मातृसपिण्डा चेति तत्र विवाहप्राप्ताविदमुच्यते "मातुरसपिण्डा" अस्यैव व्याख्या कृता द्वैतनिर्णये । तथाहि । इदं च मनुवाक्यं वरं प्राप्त प्रवर्त्तते । तथा च—यस्य सपत्नमाता तं प्रति वचनमिदं व्यर्थं निरूपितं सपत्नमातामहकुले चतुःपुरुषपर्यन्तं सापिण्ड्यस्यैव विद्यमानत्वात् । तस्माद्वरस्य या माता तस्याः या सपत्नमाता तत्पितृकुलजेति व्याख्येयम् । मातुरसगोत्रा वरस्य मातुरसगोत्रा । तस्याश्च सपिण्डा भवन्ती वरस्य सा असपिण्डेति विवाहप्राप्तौ मनुवाक्यम् । नचैतद्वचनौपदेशिकसापिण्ड्ये मातृतः षष्ठवरस्यपितृतोऽष्टमवरस्यापि निषेधः कुतो न स्यादिति वाच्यम् । पूर्वोक्तमदनपारिजातग्रन्थविरोधात् सकलशिष्टाचारविरोधाच्च । विस्तरेणोपपादनं द्वैतनिर्णये ज्ञेयम् । यद्विज्ञानेश्वरमेधातिथिप्रभृतिभिर्या मातुरसपिण्डा मातृतो याऽसपिण्डा पञ्चमादूर्ध्वं सा विवाह्येति एवं पितुरसगोत्रा चेत्यत्रापि पञ्चमात्सप्तमादूर्ध्वमित्येतदेकवाक्यता कृता तत्परमतं न स्वमतमिति लक्षणाप्रसङ्गात् । मातृपदानर्थक्याच्चेति सापिण्ड्य इत्येतावतैवार्थस्य लाभसंभवात् । अस्मिन्मते पूर्वोक्तोदाहरणे मनुवाक्यं न प्रवर्तते । पूर्वमते तु प्रवर्त्तते । मेधातिथ्यादिव्याख्यानस्य दूषितत्वादिदमेव सम्यगिति दिक् ।

इति श्रीमन्मीमांसकभट्टभानुकृतसापिण्ड्यनिर्णयः ।



## अथ ब्राह्मणस्य मांसभक्षणविचारः ।

तत्र मनुः—

यक्षरक्षः पिशाचान्नं मद्यं मांसं सुरासवम् ।
तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविरिति ॥

